## अथ द्वितीयोऽध्यायः

## गीतासारः

**सञ्जय उवाच**

**तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम्|**

**विषीदन्तमिदं वाक्यमुवाच मधुसूदनः||१||**

**सञ्जयः उवाय**— सञ्जयोऽब्रवीत्; **तम्**— अमुम् (अर्जुनम्); **तथा**— एवम्; **कृपया**— करुणया; **आविष्टम्**— अभिभूतम्; **अश्रु+पूर्ण+आकुल+ईक्षणम्**— बाष्पैः पूरिते नेत्रे यस्य तम्; **विषीदन्तम्**— अनुशोचन्तम्; **इदम्**— एतत्; **वाक्यम्**— वचनम्; **उवाच**— उक्तवान्; **मधुसूदनः**— मधोर्वधकः|

**सञ्जय उवाच— तथा कृपयाविष्टं विषीदन्तमश्रुपूर्णाकुलेक्षणमर्जुनं दृष्ट्वा मधुसूदनः कृष्ण एतद्वाक्यमुवाच|**

**तात्पर्यम्**— लौकिककरुणा शोकोऽश्रूणि च यथार्थात्मतत्त्वाज्ञानलक्षणान्येव| शाश्वतात्मनि करुणा त्वात्मसाक्षात्कारः| अत्र मधुसूदनशब्दः सार्थकः| श्रीकृष्णो मधुनामकमसुरं जघान ततः त्वं साम्प्रतं कर्तव्यानुष्ठाने मद्बाहकमज्ञानरूपमसुरं च हन्या इत्यर्जुनाभिलाषः| करुणापात्रं किं भवेदिति कोऽपि न वेत्ति| जले मज्जतो मनुष्यस्य वस्त्रे करुणा वृथा हि| स्थूलदेहरूपस्य बाह्यवस्त्रस्योद्धारेणैव कश्चनाज्ञानसमुद्रपतितो रक्षितुं न शक्यते| य एतदज्ञात्वा बाह्यवस्त्रं शोचति स शूद्र उच्यतेऽथवा यो वृथा शोचति सः| अर्जुने क्षत्रिये सति तादृशाचारस्तस्य नैवापेक्षितः| भगवाञ् श्रीकृष्णस्त्वज्ञानिनां शोकं नाशयितुं प्रभवत्येतदर्थं च भगवद्गीतां जगौ| देहात्मनोर्विश्लेषणात्मकाध्ययनेनायमध्यायोऽस्मभ्यमात्मसाक्षात्कारमुपदिशति यथा परमाधिकारिणा भगवता श्रीकृष्णेन व्याख्यातम्| यदा कश्चन कर्मफलासक्तिहीनः कर्म कुरुत आत्मतत्त्वस्थिरबोधे तिष्ठते च तदैव तदात्मसाक्षात्कारः सम्भवति|

**श्रीभगवानुवाच**

**कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्|**

**अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन||२||**

**श्रीभगवानुवाच**— श्रीभगवानुक्तवान्; **कुतः**— कस्मात्; **त्वा**— त्वाम्; **कश्मलम्**— कलुषम्; **इदम्**— एतत्; **विषमे**— सङ्कटावसरे; **समुपस्थितम्**— प्राप्तम्; **अनार्यजुष्टम्**— जीवनार्थाज्ञानिभिराचरितम्; **अस्वर्ग्यम्**— स्वर्गं प्रति न नयति यत्तत्; **अकीर्तिकरम्**— अपयशसः कारणम्; **अर्जुन**— हे अर्जुन|

**श्रीभगवानुवाच— हे अर्जुन! अस्मिन् विषमे कुत इदं कश्मलं त्वां समुपस्थितम्? इदं न खलु जीवनार्थज्ञस्यानुरूपं न च स्वर्गं प्रति नयत्यपि त्वपयशसं प्रति|**

**तात्पर्यम्**— कृष्णः श्रीभगवांश्चाभिन्नौ| अत एव समस्तगीतायां श्रीकृष्णः श्रीभगवानित्युच्यते| श्रीभगवान् परमतत्त्वस्य परा काष्ठैव| निर्विशेषं सर्वव्याप्यध्यात्मं ब्रह्म सर्वजीवान्तर्यामी परमात्मा भगवाञ् श्रीकृष्णश्चेत्युपलब्ध्यवस्थात्रये परमतत्त्वं साक्षीक्रियते| श्रीमद्भागवते (१.२.११) परतत्त्वबोधोऽयं व्याख्यायते—

वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्|

ब्रह्मेति परमात्मेति भगवानिति शब्द्यते||इति|

"अद्वयं परमतत्त्वमुपलब्ध्यवस्थात्रये साक्षीक्रियत इति तत्त्वविदो वदन्ति. तच्च ब्रह्मेति परमात्मेति भगवांश्चेति शब्द्यते|"

एतद्दिव्यं त्रिविधं तत्त्वं प्रकाशमण्डललोकरूपस्य तत्त्वत्रयस्य सूर्यस्य दृष्टान्तेन व्याख्यातुं शक्यते| सूर्यकेवलप्रकाशाध्येता प्राथमिक एव| सूर्यमण्डलज्ञस्तस्मात् प्रगतः| सूर्यलोकप्रविष्ट उत्तमः| सर्वव्यापिनिर्विशेषतेजोमयप्रकाशबोधमात्रेण सन्तुष्टा विद्यार्थिनः परमतत्त्वस्य ब्रह्मतत्त्वस्य ज्ञातृतुल्याः| तस्मात् प्रगता विद्यार्थिनः सूर्यमण्डलज्ञाः परमतत्त्वस्य परमात्मतत्त्वस्य ज्ञातृतुल्याः| सूर्यलोकान्तःप्रवेष्टारस्तु परमतत्त्वस्य भगवत्तत्त्वस्य ज्ञातृतुल्याः| अत एव परमतत्त्वस्य भगवत्तत्त्वस्य साक्षीकृता भक्तियोगिन उत्तमा योगिनः सन्ति यद्यपि परमतत्त्वजिज्ञासाप्रवृत्ताः सर्वे विद्यार्थिन एकस्मिन्नेव विषये प्रवृत्ताः| सूर्यप्रकाशस्तन्मण्डलं तदन्तःक्रियाश्च परस्परं विच्छेतुमशक्यानि| तथाप्यवस्थात्रयविद्यार्थिन एकस्यामेव श्रेण्यां न वर्गीक्रियन्ते|

भगवच्छब्दो व्यासदेवस्य पितृणा महाचार्येण पराशरमुनिना व्याख्यातः| समस्तान्यैश्वर्याणि बलं यशः सौदर्यं ज्ञानं वैराग्यं च यस्य स पुरुषोत्तमः श्रीभगवानुच्यते| बहवो जना अतीव धनिनः प्रबलाः सुन्दरा यशस्विनो विद्वांसो विरक्ताश्च सन्ति किन्त्वहं समस्तैश्वर्यबलादियुक्त इति कोऽपि घोषितुं न शक्नोति| श्रीकृष्ण एवैवं घोषितुं प्रभवति पुरुषोत्तमत्वात्| जीवानां ब्रह्मशिवनारायणानामपि कस्यापि सम्पूर्णमैश्वर्यं नैव स्युर्यथा श्रीकृष्णस्य| अत एव श्रीकृष्णः पुरुषोत्तमो भगवानेवेति ब्रह्मणा स्वयं ब्रह्मसंहितायां निर्णीतम्| तस्य सम ऊर्ध्वो वा न विद्यते| स आदिभगवान् गोविन्दः सर्वकारणानां परमकारणम्|

ईश्वरः परमः कृष्णः सच्चिदानन्दविग्रहः|

अनादिरादिर्गोविन्दः सर्वकारणकारणम्||इति ब्रह्मसंहितायाम्, ५.१|

"नानापुरुषा भगवद्गुणयुक्ताः| श्रीकृष्णस्तु परमः परमौत्कर्ष्यात्| स पुरुषोत्तमः सच्चिदानन्दविग्रह आदिपुरुषो गोविन्दः सर्वकारणकारणम्|"

श्रीमद्भागवतेऽपि पुरुषोत्तमस्य श्रीभगवतो नानावताराणां सूची वर्तते किन्तु कृष्ण आदिपुरुषः श्रीभगवानिति वर्णितो यस्मान्नानांशा अवतरन्ति|

एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्|

इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे|| इति भागवते, १.३.२८|

"अत्र वर्णिता अवतारा सर्वे पुरुषोत्तमस्य अंशाः कला वा| कृष्णस्तु भगवान् स्वयम्|"

तस्मात् श्रीकृष्ण आदिपुरुषोत्तमो श्रीभगवान् परमतत्त्वं निर्विशेषब्रह्मपरमात्मनोः स्रोत एव| पुरुषोत्तमोपस्थितौ स्वजनेऽर्जुनशोकोऽवश्यमननुरूप एव तस्मात् कृष्णः कुतःशब्देनाश्चर्यमभिव्यक्तवान्| आर्यनामकेषु सभ्येषु तादृक् कलुषत्वं कदाचिन्नापेक्ष्यते| आर्यशब्दो जीवनार्थज्ञेष्वध्यात्मसाक्षात्कारमूलकसभ्यताजनेषु प्रयोजनीयः| परमतत्त्वस्य भगवतो विष्णोः साक्षात्कार एव परमपुरुषार्थ इति देहात्मबुद्धिनीताः प्रपञ्चमोहिता न विदन्ति तस्मान्मोक्षाज्ञाः| संसारबन्धनमोक्षज्ञानहीना अनार्या उच्यन्ते| क्षत्रियभूतोऽप्यर्जुनो युद्धविचलनेन नियतकर्तव्यताया अच्यवत| इदं भीरुचरितमनार्यानुरूपमिति वर्णितम्| तादृशं कर्तव्यताविचलनं न पारमार्थिकजीवनोत्कर्षाय न चेह यशसेऽपि कल्पते| भगवाञ् श्रीकृष्णः स्वजनेऽर्जुनस्य मिथ्याकरुणां नान्वमोदत|

**क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते|**

**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप||३||**

**क्लैब्यम्**— अपौरुषम्; **मा स्म**— नैव; **गमः**— प्राप्नुहि; **पार्थ**— हे पृथापुत्र; **न**— न कदाचन; **एतत्**— इदम्; **त्वयि**— भवति; **उपपद्यते**— अर्हति; **क्षुद्रम्**— तुच्छम्; **हृदयदौर्बल्यम्**— हृत्कातर्यम्; **त्यक्त्वा**— हित्वा; **उत्तिष्ठ**— सज्जीभव; **परन्तप**— हे शत्रुसन्तापक|

**हे पार्थ! क्लैब्यं मा गच्छ| एतत्त्वयि नोपपद्यते| हे परन्तप! क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ|**

**तात्पर्यम्**— पार्थेति श्रीकृष्णपितुर्वसुदेवस्य भगिन्याः पृथायाः पुत्रेत्यर्जुनसम्बोधनम्| अतः कृष्णार्जुनयो रक्तसम्बन्धः| युद्धच्युत्या क्षत्रियपुत्रो नाममात्रेण क्षत्रियः| पापकृद् ब्राह्मणपुत्रो नाममात्रेण ब्राह्मणः| तादृशाः क्षत्रियब्राह्मणाः पित्रयोग्यपुत्रा एव| अर्जुनः क्षत्रियायोग्यपुत्रो भवेदिति नैव श्रीकृष्णाभिलाषः| अर्जुने गाढमित्रे सति श्रीकृष्णो रथे प्रत्यक्षतस्तमुपादिशत्| एतान् गुणाननादृत्यार्जुनो युद्धं त्यजेच्चेत् स निन्दनीयं कार्यमाचरेत्| तस्मादेषा वृत्तिस्तव व्यक्तित्वे नोपपद्यत इति श्रीकृष्णेनोक्तम्| ननु पूज्यभीष्मादिस्वजनं प्रत्यौदार्येण युद्धं त्यजामीति चेत्तदौदार्यं हृदयदौर्बल्यमेवेति कृष्णमतम् | तन्मिथ्यौदार्यं केनचिदधिकारिणा नान्वमोद्यत| अत एव तदौदार्यं छद्माहिंसा वा श्रीकृष्णप्रत्यक्षनिर्देशगतार्जुनादिभिस्त्यजनीया|

**अर्जुन उवाच**

**कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन|**

**इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन||४||**

**अर्जुनः उवाच**— अर्जुनोऽब्रवीत्; **कथम्**— कुतः; **भीष्मम्**— पितामहं भीष्मदेवम्; **अहम्**— (अर्जुनः); **संख्ये**— युद्धे; **द्रोणम्**— द्रोणाचार्यम्; **च**— अपि; **मधुसूदन**— हे मधुनामकासुरवधक; **इषुभिः**— बाणैः; **प्रतियोत्स्यामि**— प्रतिहनिष्यामि; **पूजा+अर्हौ**— पूजनीयौ; **अरि+सूदन** — हे शत्रुवधक|

**अर्जुन उवाच— हे मधुसूदन! हे अरिसूदन! कथमहं संख्ये पूजार्हौ भीष्मं द्रोणं चेषुभिः प्रतियोत्स्यामि?**

**तात्पर्यम्**— पितामहभीष्मद्रोणाचार्यादिगुरवः सदैव पूजनीयाः| आक्रामन्तोऽपि ते नैव प्रतियोद्धनीयाः| गुरवः शाब्दयुद्धेनापि नाक्रमणीया इति सामान्यशिष्टाचारः| कदाचित्तेषां परुषव्यवहारेऽपि तेषु परुषं नाचरेत्| तर्हि कथमर्जुनस्तान् प्रतियुध्येत? श्रीकृष्णः पितामहमुग्रसेनमाचार्यं सान्दीपनिमुनिं वाक्रामेत् किम्? श्रीकृष्णं प्रत्येता युक्तयोऽर्जुनेन प्रतिपादिताः|

**गुरूनहत्वा हि महानुभावान्**

**श्रेयो भोक्तुं भैक्ष्यमपीह लोके|**

**हत्वार्थकामांस्तु गुरूनिहैव**

**भुञ्जीय भोगान् रुधिरप्रदिग्धान्||५||**

**गुरून्**— आचार्यान्; **अहत्वा**— अमारयित्वा; **हि**— अवश्यम्; महानुभावान्— महात्मनः; **श्रेयः**— भद्रतरम्; **भोक्तुम्**— सुखमनुभवितुम्; **भैक्ष्यम्**— भिक्षया; **अपि**— अपि च; **इह**— अस्मिञ् जन्मनि; **लोके**— संसारे; **हत्वा**— मारयित्वा; **अर्थ+कामान्**— लाभोत्सुकान्; **तु**— किन्तु; **गुरून्**— आचार्यान्; **इह**— अस्मिंल्लोके; **एव**— हि; **भुञ्जीय**— अनुभवेयम्; **भोगान्**— भोग्यवस्तूनि; **रुधिर+प्रदिग्धान्**— रक्तेन लिप्तान्|

**महानुभावान् गुरूनहत्वा भैक्ष्यमपि भोक्तुमिह लोके श्रेयो हि| अर्थकामांस्तु गुरून् हत्वेह रूधिरप्रदिग्धान् भोगानेव भुञ्जीम|**

**तात्पर्यम्**— शास्त्रविध्यनुसारेण जघन्यवृत्तिप्रवृत्तो विवेकहीनो गुरुस्त्यजनीयः| दुर्योधनार्थिकसाहाय्येन भीष्मद्रोणौ तत्पक्षपातौ बभूवुर्यद्यपि केवलमर्थहेतुना तादृशं पदं ताभ्यां नैव ग्रहणीयम्| एवंभूते तयोराचार्यपदगौरवं नष्टमेव| तथापि तौ गुरू वर्तेते ततस्तौ हत्वा रक्तलिप्तभोगानेव भुञ्जीयेत्यर्जुनस्य मतम्|

**न चैतद्विद्मः कतरन्नो गरीयो**

**यद्वा जयेम यदि वा नो जयेयुः|**

**यानेव हत्वा न जिजीविषामस्**

**तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः||६||**

**न**— नैव; **च**— अपि; **एतत्**— इदम्; **विद्मः**— जानीमः; **कतरत्**— किम्; **नः**— अस्माकम्; **गरीयः**— श्रेयः; **यद्वा**— किं वा; **जयेम**— जयं प्राप्नुयाम; **यदि**— चेत्; **वा**— अथवा; **नः**— अस्मान्; **जयेयुः**— जयं प्राप्नुयुः; **यान्**— (धृतराष्ट्रपुत्रान्); **एव**— अवश्यम्; **हत्वा**— मारयित्वा; **न**— न कदाचन; **जिजीविषामः**— जीवितुमिच्छेम; **ते**— अमी सर्वे; **अवस्थिताः**— सन्निहिताः; **प्रमुखे**— अग्रे; **धार्तराष्ट्राः**— धृतराष्ट्रपुत्राः|

**नः कतरद् गरीयो यद्वा जयेम यदि वा नो जयेयुः? एतच्च वयं न विद्मः| यान् हत्वा न जिजीविषामस्त एव धार्तराष्ट्राः प्रमुखेऽवस्थिताः|**

**तात्पर्यम्**— युद्धे क्षत्रियकर्तव्येऽप्यनावश्यकहिंसासङ्कटकरणभूतो युध्येय वा तद्विरक्तो भूत्वा भिक्षया जीवेयं वेत्यर्जुनेन न ज्ञातम्| शत्रून्नाजेष्यच्चेत्तस्य शरीरयात्रासाधनमात्रं भिक्षैवाभविष्यत्| न च विजयविषयेऽसंशयत्वमासीद्वयोः पक्षयोः कस्यचिद्विजयप्राप्तिसम्भवात्| न्यायिकारणत्वेन विजयप्राप्तावपि युद्धे धार्तराष्ट्रा म्रियेरञ् चेत्तदनुपस्थितौ जीवनमतिक्लेशदं स्यात्| एवंभूते तदपि पराजयकल्पं स्यात्| एते विचारा अर्जुनस्य न केवलं महाभागवतत्वमपि त्वतिप्रबुद्धत्वं मनैन्द्रियपूर्णसंयमत्वं च निश्चयेन प्रमाणीकुर्वन्ति| राजकुलजातस्यापि तस्य भिक्षया शरीरयात्राभिलाषोऽधिकं विरक्तिलक्षणम्| एतैर्लक्षणैर्गुरुरूपश्रीकृष्णोपदेशश्रद्धया चार्जुनस्य पुण्यात्मत्वं तत्त्वतो निर्दिश्यते| अर्जुनो मुक्तये सर्वथा योग्य इति निर्णीतम्| इन्द्रियसंयमेन विना ज्ञानपदप्राप्तिर्न सम्भवेद् भक्तिज्ञानयोश्च विना मुक्तिर्न सम्भवेत्| तदतिमात्रलौकिकगुणेभ्यो व्यतिरिक्तमेतैर्दिव्यगुणैः सम्पन्न आसीदर्जुनः|

**कार्पण्यदोषोपहतस्वभावः**

**पृच्छामि त्वां धर्मसम्मूढचेताः|**

**यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे**

**शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्||७||**

**कार्पण्य+दोष+उपहत+स्वभावः**— कृपणतया दौर्बल्येन चाभिभूताः स्वगुणा यस्य सः; **पृच्छामि**— प्रश्नं करोमि; **त्वाम्**— भवन्तम्; **धर्मसम्मूढचेताः**— धर्मविषये मोहितमनो यस्य सः; **यत्**— यत् किमपि; **श्रेयः**— कल्याणम्; **स्यात्**— भवेत्; **निश्चितम्**— विश्वासपूर्वकम्; **ब्रूहि**— वद; **तत्**— अदः; **मे**— माम्;

**शिष्यः**— विद्यार्थी; **ते**— तव; **अहम्**— (अर्जुनः); **शाधि**— उपदिश; **माम्**— मह्याम्; **त्वाम्**— भवन्तम्; **प्रपन्नम्** — शरणागतम्|

**कार्पण्यदोषोपहतस्वभावो धर्मसम्मूढचेता अहं त्वां पृच्छामि— यन्निश्चितं श्रेयः स्यात्तन्मां ब्रूहि| अहं तव शिष्यः| त्वां प्रपन्नं मां शाधि|**

**तात्पर्यम्**— प्रकृतिगत्या लौकिककार्यसमस्तपद्धतिः सर्वेषां मोहहेतुरेव| पदे पदे मोहे सति पुरुषार्थकृते समर्थनिर्देशकं सद्गुरुमभिगच्छेत्| जीवनस्यानिष्टमोहाद् उद्धाराय सद्गुरुमभिगच्छेदिति समस्तशास्त्रोपदेशः| ते मोहा अग्निदाभवेऽपि दावाग्निरिव वर्तन्ते| तथैव संसारावस्थितिरेताद्दृश्येव यस्यामस्मदनिच्छयापि सम्भ्रमा घटन्ते| कोऽप्यग्निं नेच्छति तथापि स उद्भवति वयं च मोहिता भवामः| तस्माज्जीवनमोहसमाधानाय तत्समाधानबोधाय च परम्परागतगुरुमभिगच्छेदिति वैदिकप्रज्ञोपदेशः| सद्गुरुर्यस्य स सर्वज्ञ इत्यूह्यते| अतो मनुष्यो संसारमोहे न तिष्ठेदपि तु सद्गुरुमभिगच्छेदित्यस्य पद्यस्यार्थः|

संसारमोहस्थमनुष्यः कः? जीवनवैषम्याज्ञो यः सः| “यो वा एतदक्षरं गार्ग्यविदित्वास्मांल्लोकात् प्रैति स कृपणः” इति बृहदारण्यकोपनिषदि मोहितस्य वर्णनम्| यो मनुष्यरूपेण जीवनवैषम्यमसमाधायात्मसाक्षात्कारविज्ञानमबुद्ध्वा मार्जारकुक्कुरा इव देहं त्यजति स कृपण इत्यर्थः| जीवनवैषम्यसमाधानाय ताम् प्रयोक्तुं शक्तस्य जीवस्य मानुषयोनिर्मूल्यवत्तमसम्पत्तिरेव| तस्माद्योऽस्मादवसराल्लाभं न प्राप्नोति स कृपणः| अन्यथा यो जीवनसमस्तवैषम्यसमाधानायैतं देहं प्रयोक्तुं पर्याप्तबुद्धिमान् स्यात् स ब्राह्मणः| “य एतदक्षरं गार्गि विदित्वास्मांल्लोकात् प्रैति स ब्राह्मणः|”

देहात्मबुद्धौ कृपणाः कुलसमाजदेशादिष्वतिस्नेहेन कालहरणं कुर्वन्ति| प्रायो बाह्यरूपमूलका पत्नीसन्तानादिष्वासक्तिर्वर्तते| मृत्योः कुटुम्बिनो रक्षितुं समर्थोऽहमित्य् कुलं समाजो वासन्नमृत्योर्मां रक्षितुं प्रभवतीति वा कृपणस्य मतम्| एषा कुकुम्बासक्तिस्तिर्यक्ष्वपि दृश्यते यतस्तेऽपि सन्तानं रक्षन्ति| कुटुम्बिष्वासक्तिर्मृत्योस्तद्रक्षाभिलाषश्च मे मोहकारणमित्यर्जुनेनावगतं बुद्धिमत्त्वेन| यद्यपि सोऽवगतवान् यद्युद्धं कर्तव्यतारूपमेवासीत्तथापि कार्पण्यदौर्बल्येन कर्तव्यमनुष्ठातुं नाशक्नोत्| तस्मान्निश्चितं साधनं प्रस्तूयतामित्यत्र परमगुरुं श्रीकृष्णं प्रार्थयते| स श्रीकृष्णाय शिष्यरूपेणात्मानमर्पयति सखिभावेन संवादांस्त्यक्तुमिच्छति च| गुरुशिष्ययोः संवादा गम्भीराः स्युः सम्प्रति चार्जुनः स्वीकृतगुरुसमक्षमत्यन्तं गम्भीरं सम्भाषितुमिच्छति| अतः कृष्णो भगवद्गीताविज्ञान आदिगुरुरेव गीताबोधाय चार्जुनः प्रथमः शिष्य एव| गीतायामेवार्जुनस्य बोधप्रकार उक्तः| तथापि न व्यक्तिरूपं कृष्णं शरणं गन्तव्यमपि तु कृष्णाभ्यन्तरेऽजमेवेति मूर्खाणां लौकिकविदुषां व्याख्या| श्रीकृष्णस्य बहिरन्तयोर्न भेदो विद्यते| एतज्ज्ञानहीनो भगवद्गीताबोधप्रयत्ने महिष्ठो मूर्खो हि|

**न हि प्रपश्यामि ममापनुद्याद्**

**यच्छोकमुच्छोषणमिन्द्रियाणाम्|**

**अवाप्य भूमावसपत्नमृद्धं**

**राज्यं सुराणामपि चाधिपत्यम्||८||**

**न**— नैव; **हि**— अवश्यम्; **प्रपश्यामि**— अवलोके; **मम**— मे; **अपनुद्यात्**— अपनयेत्; **यत्**— यत् किमपि; **शोकम्**— परिदेवनम्; **उच्छोषणम्**— अतिशोषकरम्; **इन्द्रियाणाम्**— करणानाम्; **अवाप्य**— लब्ध्वा; **भूमौ**— पृथ्व्याम्; **असपत्नम्**— निष्कण्टकम्; **ऋद्धम्**— श्रीमत्; **राज्यम्**— राष्ट्रम्; **सुराणाम्**— देवतानाम्; **अपि**— यद्यपि; **च**— अपि; **आधिपत्यम्**— प्रभुत्वम्|

**भूमावसपत्नमृद्धं राज्यं सूराणामपि चाधिपत्यमवाप्याहं किञ्चन साधनं न हि प्रपश्यामि यदिदं मदिन्द्रियशोषणकरं शोकमपनुद्यात्|**

**तात्पर्यम्**— यद्यप्यर्जुनो धर्मसदाचारनियमज्ञानमूलका नानायुक्तीः प्रास्तौत्तथापि श्रीकृष्णरूपगुरुसाहाय्यं विना यथार्थं वैषम्यं समाधातुमसमर्थ आसीदिति प्रतिभाति| मज्जीवनशोषणकरस्य वैषम्यस्यापनयनाय मे मिथ्याज्ञानं व्यर्थमेवेत्यर्जुनेनावगतम्| तथा श्रीकृष्णस्येव गुरोः साहाय्यं विना मोहमपनेतुमशक्यमेवासीत्तेन| विद्यालयशिक्षाविद्वत्तोन्नतपदाद्या जीवनवैषम्यापनयने सर्वतो व्यर्थाः| साहाय्यं श्रीकृष्णादिव गुरोः प्राप्तुं शक्यते| अत एव सम्पूर्णं कृष्णभावनाभावितो गुरुः सद्गुरुरेवेति निर्णयस्तस्य जीवनवैषम्यापनयनसमर्थत्वात्| तस्य जातिमनादृत्य कृष्णभावनामृतविज्ञानविचक्षणो यः स सद्गुरुरेवेति श्रीचैतन्येनोक्तम्—

किबा विप्र किबा न्यासी शूद्र केन नय|

येइ कृष्णतत्त्ववेत्ता सेइ गुरु हय|| इति|

"वेद ज्ञो विप्रो वा नीचजातिर्वा सन्न्यासी वेति लघ्वर्थमेव| कृष्णविज्ञानविचक्षणश्चेत् स सिद्धः सद्गुरुः|" (चैतन्यचरितामृते, मध्य, ८.१२८) एवं कृष्णभावनामृतविज्ञानविचक्षणोऽभूत्वा कोऽपि सद्गुरुर्नैव| यथोक्तं पद्मपुराणे—

षट्कर्मनिपुणो विप्रो मन्त्रतन्त्रविशारदः|

अवैष्णवो गुरुर्न स्याद्वैष्णवः श्वपचो गुरुः|| इति|

समस्तवेदवेदाङ्गादिविचक्षणो ब्राह्मणो कृष्णभावनामृतविज्ञानविचक्षणो वैष्णवोऽभूत्वा गुरुत्वेऽयोग्यः| नीचजातिस्तु कृष्णभावनाभावितो वैष्णवश्चेद् गुरुत्वे योग्य इत्यर्थः|

जन्मजराव्याधिमरणरूपं लौकिकजीवनवैषम्यं धनसञ्चयेनार्थिक विकासेन च प्रतिरोद्धुमशक्यम्| विश्वे नानास्थानेषु साधनधनार्थिकविकासपूर्णानि राज्यानि सन्ति तथापि तत्र लौकिकवैषम्यं विद्यमानम्| ते विभिन्नोपायैः शान्तिमन्विष्यन्ति परन्तु तदैव यथार्थसुखं प्राप्नुयुर्यदा कृष्णभावनाभावितसद्गुरुसकाशात् कृष्णविज्ञानमयभगवद्गीताभागवतपुराणोपदेशं गृह्णीयुः|

आर्थिकविकासो लौकिकसुखं च कुलसमाजदेशविदेशवैषम्यशोकापनयनाय कल्पिष्येतां चेद् भूमावसपत्नराज्यं स्वर्गे च सूराणामाधिपत्यमपि मम शोकं नापनयेयातामित्यर्जुनो नावदिष्यत्| तस्मादैक्याय शान्तये चोचितमार्गं कृष्णभावनामृतं शरणं गतः सः| कस्मिञ्चित् क्षणे विश्वाधिपत्यमार्थिकविकासो वा प्रकृत्युत्पन्नविपद्भिः

समाप्तुं शक्यते| साम्प्रतं मनुष्यश्चन्द्रलोकं प्राप्तुमिच्छति किन्तूर्ध्वलोकगतिरप्येकेन प्रहारेण समाप्तुं शक्यते| “क्षीणे पुण्ये मर्त्यलोकं विशन्ति” इति भगवद्गीतायां दृढीक्रियते| पुण्यकर्मफले क्षीणे सति सुखस्य पराकाष्ठातो जीवा अधः पतन्तीत्यर्थः| अनेन प्रकारेण विश्वस्य नानाराजनीतिज्ञाः पतिताः| तादृशं पतनं केवलं शोकस्याधिकहेतुरेव| अत एव शोकस्यात्यन्तिकनिवृत्तिरिष्यते चेत्तर्ह्यर्जुनवत् कृष्णं शरणं गन्तव्यम्| मद्वैषम्यं निश्चयेनापनयेत्यर्जुनः कृष्णं प्रार्थयत| एष कृष्णभावनामृतविधिः खलु|

**सञ्जय उवाच**

**एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः|**

**न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह||९||**

**सञ्जयः उवाच**— सञ्जयोऽब्रवीत्; **एवम्**— इत्थम्; **उक्त्वा**— भाषित्वा; **हृषीकेशम्**— कृष्णं प्रति; **गुडाकेशः**— अर्जुनः; **परन्तपः**— शत्रुसन्तापकः; **न**— नैव; **योत्स्ये**— युद्धं करिष्यामि; **इति**— इत्थम्; **गोविन्दम्**— इन्द्रियसुखदं कृष्णम्; **उक्त्वा**— भाषित्वा; **तूष्णीम्**— मौनः; **बभूव**— अभवत्; **ह**— अवश्यम्|

**सञ्जय उवाच— परन्तपो गुडाकेशो हृषीकेशमेवमुक्त्वा न योत्स्य इति गोविन्दमुक्त्वा ह तूष्णीं बभूव|**

**तात्पर्यम्**— अर्जुनो न युत्स्यते तत्स्थाने तु भिक्षावृत्तये युद्धभूमिं त्यक्तुकाम इति श्रुत्वा धृतराष्ट्रेणात्यन्तं प्रसन्नेन भाव्यमासीत्| किन्त्वर्जुनः शत्रुवधाय दक्षः परन्तप इत्युक्त्वा सञ्जयस्तस्याशां बभञ्ज| यद्यपि स्वल्पकालमर्जुनः कुटुम्बस्नेहान्मिथ्याशोकाभिभूत आसीत्तथापि शिष्यरूपेणोत्तमगुरुं श्रीकृष्णं शरणं गतः| शीघ्रमेव कुटुम्बासक्तिजनितमिथ्याशोकमुक्तो भूत्वात्मसाक्षात्कारसिद्धज्ञानेन कृष्णभावनामृतेन प्रबुद्धो भूत्वा स निश्चयेन योत्स्यत इत्यनेन सूच्यते| एवं श्रीकृष्णेन प्रबुद्धः सन्नर्जुनः समाप्तिं यावद्योत्स्यते येन धृतराष्ट्रस्य हर्षो भग्नो भविष्यति|

**तमुवाच हृषीकेशः प्रहसन्निव भारत|**

**सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः||१०||**

**तम्**— अमुम्; **उवाच**— उक्तवान्; **हृषीकेशः**— इन्द्रियेशः कृष्णः; **प्रहसन्**— प्रसन्नमुखः सन्; **इव**— यथा; **भारत**— हे धृतराष्ट्र; **सेनयोः**— अनीकयोः; **उभयोः**— द्वयोः पक्षयोः; **मध्ये**— अन्तरा; **विषीदन्तम्**— अनुशोचन्तम्; **इदम्**— एतत्; **वचः**— वचनम्|

**हे भारत! तदोभयोः सेनयोर्मध्ये प्रहसन्निव हृषीकेशस् विषीदन्तमर्जुनमिदं वच उवाच|**

**तात्पर्यम्**— दृढमित्रयोर्हृषीकेशगुडाकेशयोः सम्भाषणं प्रचलति स्म| मित्ररूपेण द्वौ समपदे स्थितौ किन्तु तयोरेकः स्वेच्छयान्यस्य शिष्यो बभूव| श्रीकृष्णोऽहसद्यतः सखा शिष्यं भवितुमवृणीत| सर्वेश्वरत्वात् स सर्वस्वामिरूपेण सदैवोत्तमपदे स्थितस्तथापि यो भक्तो मित्रपुत्रकान्तादिरूपिणं श्रीकृष्णमिच्छति तत्कृते भगवान् स्वेच्छया तां तां भूमिकां स्वीकरोति| परन्तु स्वीकृतगुरुर्भूत्वा स सद्यो गुरुरूपं गृहीत्वा यथापेक्षितं गाम्भीर्येण शिष्यमुवाच| गुरुशिष्यसंवाद उभयोः सेनयोः समक्षं स्फुटं कृतो येन सर्वेषां हितमासीदिति प्रतिभाति| एवं भगवद्गीतासंवादो नैव विशिष्टजनकृते विशिष्टसमाजकृते वापि तु सर्वेषां कृते| अत्र सखायः शत्रवो वा समानं तच्छ्रवणेऽधिकारिणः|

**श्रीभगवानुवाच**

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे|**

**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः||११||**

**श्रीभगवानुवाच**— श्रीपुरुषोत्तम आह; **अशोच्यान्**— शोकायोग्यान्; **अन्वशोचः**— शोकमनुभवसि; **त्वम्**— भवान्; **प्रज्ञा+वादान्**— विद्वत्तापूर्णवचनम्; **च**— अपि; **भाषसे**— वदसि; **गत+असून्**— नष्टं जीवनं येषां तान्; **अगत+असून्**— अनष्टं जीवनं येषां तान्; **च**— अपि; **न**— न कदाचन; **अनुशोचन्ति**— परिदेवन्ते; **पण्डिताः**— विद्वांसः|

**श्रीभगवानुवाच— अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे| पण्डिता गतासूनगतासूंश्च नानुशोचन्ति|**

**तात्पर्यम्**— सद्यो गुरुपदं स्वीकृत्य भगवान् वक्रोक्त्या मूर्खसम्बोधनेन शिष्यमदण्डयत्| त्वं पण्डितवत् सम्भाषसे किन्तु शरीरज्ञ आत्मज्ञः पण्डितो जीवने मरणे वा शरीरस्य काञ्चनावस्थां नानुशोचतीति भगवतोक्तम्| यथोत्तराध्यायेषु व्याख्यास्यते जडपदार्थज्ञानमात्मज्ञानं तदीशज्ञानं चेति ज्ञानं खल्विति स्पष्टं भविष्यति| ननु राजनीत्यपेक्षया समाजनीत्यपेक्षया वा धर्मविधिर्गरीयान्मन्तव्य इत्यर्जुनयुक्तिः परन्तु जडपदार्थात्मपरमेश्वरज्ञानं धर्मविधेरपि महत्तरमिति तेन न ज्ञातम्| एवमहमतिविद्वानिति प्रस्तुतिं न कुर्यात्तज्ज्ञानरहितत्वात्| अतिविद्वताहीनत्वादेव अशोच्यानन्वशोचत्| जनित्वा देह आद्य वा श्वो वा नाश्यः| तस्मादात्मापेक्षया स नैतावान्महार्थः| एतज्ज्ञस्तत्त्वतो विद्वानेव| शरीरावस्थामनादृत्य तस्य शोकहेतुर्नैव विद्यते|

**न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः|**

**न चैव न भविष्यामः सर्वे वयमतः परम्||१२||**

**न**— न कदाचन; **तु**— किन्तु; **एव**— अवश्यम्; **अहम्**— (कृष्णः); **जातु**— यस्मिन् कस्मिंश्चित् काले; **न**— नैव; **आसम्**— अवर्ते; **न**— नैव; **त्वम्**— भवान्; **न**— न

च; **इमे**— एते; **जनाधिपाः**— नृपाः; **न**— न
कदाचन; **च**— अपि; **एव**— अवश्यम्; **न**— नैव; **भविष्यामः**— वर्तिष्यामहे; **सर्वे वयम्**— समस्ता वयम्; **अतः परम्**— अनन्तरम्|

**न त्वेवाहं जातु नासं त्वं नासीरिमे जनाधिपा नासन् वा न चैवातः परं सर्वे वयं न भविष्यामः|**

**तात्पर्यम्**— तत्तद्विभिन्नावस्थासु तत्तद्व्यक्तिगतकर्मतत्फलानुसारेणासंख्यजीवानां भर्ता श्रीभगवान् पुरुषोत्तम एवेति कठोपनिषदि श्वेताश्वतरोपनिषदि चोक्तम्| स एव श्रीभगवान् पुरुषोत्तमः स्वांशैः सर्वजीवहृदयेष्वपि निवसति| बहिरन्तःस्थैकपरमेश्वरद्रष्टारः साधव एवं तत्त्वतः पूर्णां शाश्वतां शान्तिमधिगच्छन्ति|

नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्|

तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतारेषाम्||

इति कठोपनिषदि, २.२.१३|

यदर्जुनदत्तवैदिकसत्यं तदेव विश्वे महापण्डितमानिभ्यो दीयते येषां ज्ञानं तत्त्वतोऽल्पकम्| अहं त्वं युद्धभूमौ समवेतनृपाश्च सर्वदा पृथगात्मानः स्मः, अहं तु तन्मुक्तबद्धावस्थयोस्तद्धर्तास्मीति भगवता स्पष्टमुक्तम्| श्रीभगवान् पुरुषोत्तमः परमः पृथगात्मैव भगवन्नित्यसङ्गी चार्जुनः समवेतनृपाश्च सर्वे सर्वदा पृथगात्मानः| न च भूतकाले ते व्यक्तिरूपेण नासन्न च भविष्ये न स्थास्यन्ति| भूतकाले तेषां व्यक्तित्वमासीदेव भविष्ये च प्रतिबन्धं विना स्थास्यति| अत एव कस्मि ञ्चि च्छोकनिमित्तं नैव|

मुक्तेरनन्तरं मायावरणहीनो जीवो निर्विशेषब्रह्मलीनो भूत्वा व्यक्तित्वहीनो भवतीति मायावादमतमत्र परमाचार्येण श्रीकृष्णेन नानुमोद्यते| न च बद्धावस्थायामेव व्यक्तित्वमिति मतमत्र समर्थ्यते| भविष्येऽपि ममान्येषां च व्यक्तित्वं सदा स्थास्यतीति भगवान् स्पष्टमुवाच यथोपनिषत्सु दृढीकृतम्| श्रीकृष्णकथनं प्रामाणिकमेव तस्य मायावशत्वासम्भवात्| व्यक्तित्वसत्ता नाभविष्यच्चेत्तर्हि श्रीकृष्णस्तदेतावन्न दृढमकरिष्यद् भविष्यकालदृष्ट्यापि| ननु श्रीकृष्णोक्तं व्यक्तित्वं भौतिकमेव न त्वध्यात्ममिति मायावादियुक्तिं स्वीकृत्यापि कथं श्रीकृष्णव्यक्तित्वं विशेषितुं शक्यते| श्रीकृष्णो भूतकाले भविष्ये च स्वव्यक्तित्वं दृढीकरोति| सोऽनेकप्रकारैः स्वव्यक्तित्वं दृढीकृतवान्| निर्विशेषब्रह्म च तदधीनमुक्तम्| श्रीकृष्णः सदा स्वव्यक्तित्वं धरति| यदि स पृथक्चेतोरूपः सामान्यबद्धजीवो मन्यते तर्हि भगवद्गीतायाः प्रामाणिकशास्त्रत्वमर्थहीनं स्यात्| मानुषचतुर्दोषयुक्तो सामान्यो नरः श्रवणार्होपदेशप्रदानायासमर्थो हि| गीता तु तादृशसाहित्यस्योपरि तिष्ठति| भगवद्गीतातुल्यं किञ्चन लौकिकपुस्तकं न विद्यते| यदा कोऽपि श्रीकृष्णं सामान्यं नरं मन्यते तदा गीता सर्वथा महत्त्वहीनं भवति| नन्वत्रोक्तं बहुव्यक्तित्वं लौकिकं शरीरसम्बद्धमेवेति मायावादियुक्तिः| परन्त्वस्मात् पद्यात् पूर्वमेवैषा देहात्मबुद्धिर्निन्दिता| जीवानां देहात्मबुद्धिं निन्दित्वा कथं श्रीकृष्णः पुनर्देहमूलकं सिद्धान्तं प्रस्तुयात्? तस्माद्व्यक्तित्वमध्यात्ममूलकमेव यथा श्रीरामानुजादिमहाचार्यैर्दृढीकृतम्| इदं पृथगात्मत्वं भगवद्भक्तैरवगम्यत इति गीतायामनेक्रोक्तम्| पुरुषोत्तमाय भगवते श्रीकृष्णायेर्ष्या अस्मिन्महाशास्त्रे तत्त्वतः प्रवेष्टुमनर्हाः| अभक्तानां गीतोपदेशोपलब्धिप्रयासो मधुपात्रलेहनाय मधुकरप्रयास इव| मधुपात्रापावरणमकृत्वा मधुलेहनमशक्यम्| भगवद्गीतारहस्यं भक्तैरेवावगन्तुं शक्यते न त्वन्यैरिति चतुर्थाध्यायेऽत्रापि प्रोक्तम्| न च गीता भगवदस्तित्वायापीर्ष्यैः स्प्रष्टुं शक्यते| अत एव गीतायां मायावादिव्याख्या

समस्ततत्त्वस्यातीव भ्रमकारिवर्णनम्| श्रीचैतन्यो मायावादिकृतव्याख्यापठनादस्मान्निषिद्धवान्| यो मायावादिदर्शनस्य तादृशबोधं स्वीकरोति स गीतायथार्थरहस्यबोधाय समस्तसामर्थ्यरहितो भवतीति प्रबोधयति च| व्यक्तित्वं प्रपञ्चसम्बद्धमेव चेत्तर्हि भगवदुपदेशप्रदानेन प्रयोजनं नैव| ईश्वरजीवयोर्द्वैतव्यक्तित्वं शाश्वतं तत्त्वमेव वेदैश्च दृढीकृतं यथोपर्युक्तम्|

**देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा|**

**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति||१३||**

**देहिनः**— शरीरधारिणः; **अस्मिन्**— एतस्मिन्; **यथा**— इव; **देहे**— शरीरे; **कौमारम्**— बाल्यम्; **यौवनम्**— तारुण्यम्; **जरा**— वृद्धावस्था; **तथा**— तादृशम्; **देह+अन्तर+प्राप्तिः**— अन्यशरीरोपलब्धिः; **धीरः**— स्थिरबुद्धिर्नरः; **तत्र**— तस्मिन्; **न**— न कदाचन; **मुह्यति**— मोहितो भवति|

**यथास्मिन् देहे देहिनः कौमारं यौवनं जरा च भवन्ति तथा मरणे देहान्तरप्राप्तिश्च| धीरस्तत्र न मुह्यति|**

**तात्पर्यम्**— प्रत्यगात्मभूतत्वात् सर्वेषां प्राणिनां प्रतिक्षणं देहपरिवर्तनं वर्तते कदाचन शिशुरूपेण तरुणरूपेण वृद्धरूपेण वा| तथापि स एवात्मा परिवर्तनरहितस्तिष्ठति| अन्ततोऽयमात्मा मृत्युकाले देहान्तरमाप्नोति| आगामिजन्मनि भौतिकस्य वा दिव्यस्य वा देहान्तरस्य प्राप्तेर्निश्चितत्वेन भीष्ममरणे द्रोणमरणे वार्जुनशोकहेतुर्नैव ययोः सम्बन्धे तस्य महती चिन्तासीत्| प्रत्युत तयोर्जीर्णदेहत्यागान्नवीनदेहप्राप्त्या नवशक्तिप्राप्तिर्हर्षकारणमेव भवेत्| असौ शरीरपरिवर्तनमिह स्वकर्मानुसारेण सुखनानात्वाय दुःखनानात्वाय वा कल्पते| तथा महात्मानौ भीष्मद्रोणौ निश्चयेनामुत्र दिव्यदेहौ प्राप्नुयातामथवा श्रेयसे लौकिकभोगाय त्रिदशदेहौ तावत्| एवंभूत उभयोर्दशायोः शोकहेतुर्नैव| प्रत्यगात्मनः परमात्मनो भौतिकाध्यात्मयोः प्रकृत्योश्च पूर्णं तत्त्वज्ञानं यस्य स धीरोऽथवातिस्थिरबुद्धिरुच्यते| तादृशो नरः शरीरपरिवर्तनेन कदाचिन्न मुह्यति|

खण्डसादात्मनोऽछेदनीयत्वेन मायावादिनामेकात्मवादो मन्तुमशक्यः| प्रत्यगात्मसाच्छेदनेन ब्रह्म छेदनीयं परिवर्तनीयं वा स्याद्येन ब्रह्मापरिवर्तनीयत्वसिद्धान्तानुपपत्तिः| ब्रह्मणो विभिन्नांशाः सनातना एव किन्तु प्रकृतौ पतनप्रवणत्वात्ते क्षरा उच्यन्त इति गीतायां दृढीकृतम्| ते विभिन्नांशा नित्यदा तादृशास्तिष्ठन्ति तस्मान्मुक्तेरनन्तरमपि प्रत्यगात्मा विभिन्नांशरूपेणैव तिष्ठति| परन्तु मुक्तेरनन्तरं स पुरुषोत्तमेन सह सच्चिदानन्दमयजीवनं भुंक्ते| सर्वदेहान्तर्यामिनि परमात्मनि प्रतिबिम्बवादो नोपपद्यते| स जीवाद् भिन्न एव| आकाशे जले प्रतिबिम्बिते सति तत्र सूर्यचन्द्रनक्षत्रप्रतिबिम्बानि दृश्यन्ते| अत्र जीवा नक्षत्रवत् परमेश्वरश्च सूर्यचन्द्रवत्| विभिन्नांश आत्मार्जुन एव परमात्मा तु भगवाञ् श्रीकृष्णः| तावेकस्मिन्नेव पदे न तिष्ठत इति चतुर्थाध्यायादौ स्फुटं भविष्यति| यद्यर्जुनः श्रीकृष्णस्य समपदे स्यात्तथा च श्रीकृष्णोऽर्जुनाच्छ्रेयान्न स्यात्तर्हि तयोरुपदेश्योपदेशकसम्बन्धो निरर्थकः स्यात्| तावुभौ मायामोहितौ चेत्तर्हि तयोरुपदेशकभूतेनोपदेश्यभूतेन च प्रयोजनं न स्यात्| तादृशोपदेशो वृथा स्यान्मायावशसदुपदेशकत्वासम्भवात्| एवंभूते विस्मृतिप्रवणान्मायामोहिताज्जीवादर्जुनात् परमेश्वरः श्रीकृष्णः श्रेयानेवेति स्वीक्रियते|

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः|**

**आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत||१४||**

**मात्रास्पर्शाः**— इन्द्रियविषयानुभवाः; **तु**— किन्तु; **कौन्तेय**— हे अर्जुन; **शीत+उष्ण+सुख+दुख+दाः**— हिमग्रीष्मानन्दवेदनादातारः; **आगम+अपायिनः**— व्यक्ताव्यक्ताः; **अनित्याः**— अशाश्वताः; **तान्**— अमून्; **तितिक्षस्व**— सहस्व; **भारत**— हे भरतवंशज|

**हे कौन्तेय! शीतोष्णसुखदुःखदा मात्रास्पर्शास्त्वागमापायिनोऽनित्याः| हे भारत! तांस्तितिक्षस्व|**

**तात्पर्यम्**— कर्तव्योचितानुष्ठाने सुखदुःखयोरनित्योदयान्तर्धानयोः सहनं शिक्षणीयम्| माघेऽपि प्रातः स्नानं कर्तव्यमिति वैदिकविधिः| तदातिशीतले भूतेऽपि तदनादृत्य धर्मनिष्ठः स्नानान्नोद्विजते| तथैवाषाढे ग्रीष्मोष्णतमकाले स्त्री महानसे पचनक्रियातो नोद्विजते| शीतोष्णादिक्लेशाननादृत्य स्वकर्तव्यमनुष्ठेयमेव| तथैव युद्धं क्षत्रियधर्म एव तस्मान्मित्रबान्धवयुद्धेऽपि स्वविहितकर्तव्यान्न विचलनीयम्| ज्ञानपदपर्यन्तमुन्नतये धर्मविहितविधिविधानानि पालनीयान्येव भक्तिज्ञानयोर्मायाग्रहमोक्षैकोपायत्वात्|

अर्जुनं प्रति सम्बोधनं नामद्वयं सार्थकमपि| कौन्तेयेति सम्बोधनेन तस्य मातुः कुलरक्तसम्बन्ध उद्दिष्टः| भारतेति सम्बोधनेन तस्य पितुः कुलमहत्त्वमुद्दिष्टम्| उभयोः कुलयोस्तेन कुलीनेन भाव्यम्| कौलिन्यं धर्मोचितानुष्ठानाय कल्पते ततः स युद्धं नैव परिहरेत्|

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ|**

**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते||१५||**

**यम्**— यं कञ्चन; **हि**— अवश्यम्; **न**— न कदाचन; **व्यथयन्ति**— पीडयन्ति; **एते**— इमे; **पुरुषम्**— मनुष्यम्; **पुरुषर्षभ**— हे नरश्रेष्ठ; **सम+दुःख+सुखम्**— अभिन्नौ हर्षक्लेशौ यस्य तम्; **धीरम्**— तितिक्षुम्; **सः**— असौ; **अमृतत्वाय**— मुक्तये; **कल्पते**— योग्यो भवति|

**एते सुखदुःखदा मात्रास्पर्शा यं समदुःखसुखं धीरं पुरुषं न हि व्यथयन्ति सोऽमृतत्वाय कल्पते|**

**तात्पर्यम्**— आत्मसाक्षात्कारोत्कृष्टावस्थाप्राप्तयेऽध्यवसायस्थिरः सुखदुःखाक्रमणसहनसमर्थो यः सोऽवश्यं मुक्तियोग्यः| वर्णाश्रमधर्मे चतुर्थावस्था सन्न्यासाश्रमः कष्टद एव| सिद्ध्याप्तिधीरस्तु सर्वकष्टान्यनादृत्य सन्न्यासमवश्यं गृह्णाति| प्रायः कष्टानि पत्नीबालादिकुटुम्बसम्बन्धच्छेदनादुद्भवन्ति किन्तु यदि कोऽपि तत्कष्टसहनसमर्थोऽस्ति तर्हि तस्यात्मसाक्षात्कारमार्गः सिद्धः खलु| तथैव क्षत्रियधर्मानुष्ठानेऽर्जुनाय धैर्यमुपदिश्यते कुटुम्बिभिरथवा सदृशप्रियजनैर्युद्धे कष्टेऽपि| चतुर्विंशतिवर्षीयः श्रीचैतन्यमहाप्रभुः सन्न्यासं जग्राह तदधीनयोस्तु नववधूवृद्धमात्रोश्चान्यः

पालको नासीत्| तथापि गरीयसे प्रयोजनाय स सन्न्यासं गृहीत्वा गरीयस्य धर्मस्यानुष्ठाने दृढः स्थितः| भवबन्धमुक्तयेऽयमेव विधिः|

**नासतो विद्यते भावो नाभावो विद्यते सतः|**

**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः||१६||**

**न**— न कदाचन; **असतः**— अविद्यमानस्य; **विद्यते**— वर्तते; **भावः**— सत्ता; **न**— न कदाचन; **अभावः**— विनाशः; **विद्यते**— वर्तते; **सतः**— नित्यस्य; **उभयोः**— द्वयोः; **अपि**— हि; **दृष्टः**— अवलोकितः; **अन्तः**— निर्णयः; **तु**— हि; **अनयोः**— एतयोः; **तत्त्व+दर्शिभिः**— सत्यद्रष्टृभिः|

**असतो देहस्य भावो न विद्यते न च सत आत्मनोऽभावो विद्यते| उभयोरनयोस्त्वनुसन्धानं कृत्वायमन्तो दृष्टस्तत्त्वदर्शिभिः|**

**तात्पर्यम्**— परिवर्तनशीलदेहस्य स्थिरता न विद्यते| नानाधातूनां क्रियाप्रतिक्रियाभिः प्रतिपलं कलेवरं परिवर्तत इत्यर्वाचीनवैद्यविज्ञानेन स्वीक्रियते| एवं कलेवरस्य वर्धनं वृद्धत्वं च प्रवर्तेते| आत्मा तु देहमनसोः समस्तपरिवर्तनान्यनादृत्य ध्रुवं विद्यते| जडपदार्थात्मनोरयं भेदः| स्वभावेन देहः निरन्तरं परिवर्तत आत्मा तु शाश्वत एव| अयं सिद्धान्तो निर्गुणवादिसगुणवादिभिः सर्वैस्तत्त्वदर्शिभिः प्रतिपाद्यते| विष्णुपुराणे (२.१२.३८) अप्येवमुक्तम्— ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च| नद्यः समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य|| इति| सदसच्छब्दावात्मजडपदार्थाभिप्रायावेवेति सर्वेषां तत्त्वदर्शिनां निर्णयः|

अज्ञानप्रभावमोहितजीवेभ्यो भगवदुपदेशस्यायमारम्भः| अज्ञानापनयनायोपास्योपासकनित्यसम्बन्धस्य पुनः स्थापनं पुरुषोत्तमविभिन्नांशयोस्तदनुषङ्गिकं भेदज्ञानं चापेक्ष्येते| सम्पूर्णेन स्वात्मविवेकेन परमेश्वरयाथात्म्यमवगन्तुं शक्यते यत आत्मपरमात्मभेदोऽखण्डखण्डसम्बन्धवदवगम्यते| वेदान्तसूत्रे श्रीमद्भागवते च परमेश्वरस्य सर्वोद्भवमूलत्वं प्रतिपादितम्| त उद्भवाः परापरप्राकृतिकक्रमरूपेणानुभूयन्ते| जीवाः परप्रकृतिरेवेति सप्तमाध्याये प्रकटं भविष्यति| शक्तिशक्तिमदभिन्नत्वेऽपि शक्तिमान् परमेश्वर इति स्वीक्रियते शक्तिरथवा प्रकृतिरधीनेति च| तस्माज्जीवाः सदैव परमेश्वराधीना एव स्वामिभृत्यवद् गुरुशिष्यवच्च| अज्ञानवशे तादृशस्य स्पष्टज्ञानस्योपलब्धिरशक्यैव| तदज्ञानस्यात्यन्तिकनिवृत्तये भगवान् सर्वजीवप्रबोधकृते भगवद्गीतामुपदिशति|

**अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्|**

**विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति||१७||**

**अविनाशि**— अक्षरम्; **तु**— किन्तु; **तत्**— अदः; **विद्धि**— जानीहि; **येन** **सर्वम्**— येन समस्तम्; **इदम्**— एतत्; **ततम्**— व्याप्तम्; **विनाशम्**— ध्वंसम्; **अव्ययस्य**— अक्षरस्य; **अस्य**— एतस्य; **न कश्चित्**— न कोऽपि; **कर्तुम्**— अनुष्ठातुम्; **अर्हति**— शक्नोति|

**तत्त्वविनाशि विद्धि येनेदं सर्वं शरीरं ततम्| अस्याव्ययस्यात्मनो विनाशं कश्चित् कर्तुं नार्हति|**

**तात्पर्यम्**— अत्र समस्तदेहव्याप्तात्मनो याथात्म्यमधिकं स्फुटं व्याख्याते| यत् समस्तदेहे व्याप्तं तच्चेत इति कोऽप्यवगन्तुमर्हः| प्रतिजनं शरीरांशे पूर्णशरीरे वा सुखदुःखयोः सचेतनम्| चेतोव्याप्तिस्तु स्वदेहे परिमिता| एकस्य देहस्य सुखदुःखेऽन्येनाज्ञाते| अतः प्रतिशरीरं प्रत्यगात्मनो देहवत्त्वमेवात्मोपस्थितिलक्षणं च पृथक्चेतोरूपेणानुभूयते| परिमाणेऽयमात्मा केशाग्रभागस्य दशसहस्रतमभागतुल्य इति वर्ण्यते| इदं श्वेताश्वतरोपनिषदि (५.९) दृढीकृतम्—

बालाग्रशतभागस्य शतधा कल्पितस्य च|

भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते|| इति|

तथैवायमेव निर्णय उक्तः—

केशाग्रशतभागस्य शतांशः सादृशात्मकः|

जीवः सूक्ष्मस्वरूपोऽयं संख्यातीतो हि चित्कणः|| इति चै.च. मध्य. १९.१४०|

अतः प्रत्यगात्मानस् चित्कणो जडपदार्थाणुभ्यः सूक्ष्मतरः| ते चित्कणा असंख्याः| अयमतिसूक्ष्माध्यात्मस्फुलिङ्गः शरीरमूलं तत्प्रभावश्च सम्पूर्णशरीरे व्याप्यत औषधिप्रभाववत्| अयमात्मप्रवाहः सम्पूर्णशरीरे चेतोरूपेणानुभूयते| इदमेवात्मोपस्थितिप्रमाणम्| चेतोहीनं शरीरं मृतमेवेति प्राकृतोऽप्यवगन्तुं समर्थः| तच्चेतः शरीरे केनचिद् भौतिकोपचारेण पुनर्जीवयितुमशक्यम्| तस्माच्चेतो नैव भौतिकसंयोगहेतुकमपि त्वात्महेतुकम्| मुण्डकोपनिषदि (३.१.९) सूक्ष्मात्मनः परिमाणमधिकं व्याख्यातम्

एषोऽणुरात्मा चेतसा वेदितव्यो

यस्मिन् प्राणः पञ्चधा संविवेश|

प्राणैश्चित्तं सर्वमोतं प्रजानां

यस्मिन् विशुद्धे विभवत्येष आत्मा|| इति|

हठयोगपद्धतिर्विविधासनैः शुद्धात्मानं परितः पञ्चविधप्राणनियन्त्रणाय कल्पते न लौकिकलाभायापि तु भवबन्धनात् सूक्ष्मात्मनो मुक्तये|

एवं समस्तवैदिकशास्त्रेषु सूक्ष्मात्मस्वरूपमभिमतं तत्त्वतश्च तत् कस्यचिदनुन्मत्तस्य व्यावहारिकानुभवे प्रतीयते| अयं सूक्ष्मात्मा सर्वव्यापिविष्णुतत्त्वमिति केवलमुन्मत्तस्य मतम्|

सूक्ष्मात्मप्रभावो विशिष्टशरीरे सर्वतो व्याप्तुं शक्यः| "एसोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा सम्विवेश, प्राणैश्चित्तं सर्वमोतं प्रजानाम्" इति मुण्डकोपनिषत्| यतस्तत्परिमाणं लौकिकविज्ञानिग्रहणशक्तेः परमेव ततस्तेषु केचन मूर्खतयात्मनोऽनस्तित्वं प्रतिपादयन्ति| प्रत्यगात्मा परमात्मना सहावश्यं हृदयेऽवतिष्ठति तथा च तस्मादेव भागाच्छारीरिकगतेः सर्वशक्तय उद्भवन्ति| फुप्फुसाभ्यां प्राणान् वहन्तो रक्तकणा आत्मसकाशाच्छक्तिं प्राप्नुवन्ति| अस्मिन् स्थाने आत्मना त्यक्ते सति रक्तोत्पादनाय विलयनक्रिया विरमति| वैद्यविज्ञानं रक्तकणानां महत्त्वमभिमन्यते किन्तु शक्तिप्रभव आत्मैवेत्य् निर्नेतुमसमर्थम्| तथापि वैद्यविज्ञानं शरीरस्य सर्वशक्तीनामासनरूपं हृदयं स्वीकरोति|

अखण्डाध्यात्मस्य ते सूक्ष्मकणाः सूर्यप्रकाशकणतुल्याः| सूर्यप्रकाशेऽसंख्या उज्ज्वलकणा विद्यन्ते| तथैव परमेश्वरस्य विभिन्नांशाः तस्य प्रभाख्याया पराशक्तेः किरणानां सूक्ष्मस्फुलिङ्गाः| एवमर्वाचीनवैद्यविज्ञानानुगो वा वैदिकज्ञानानुगो वा शरीरान्तरात्मास्तित्वमस्वीकर्तुं नार्हति| आत्मविज्ञानं तु भगवद्गीतायां पुरुषोत्तमेन स्वयं स्फुटं प्रतिपादितम्|

**अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः|**

**अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत||१८||**

**अन्तवन्तः**— नश्वराः; **इमे**— एते; **देहाः**— शरीराणि; **नित्यस्य**— शाश्वतस्य; **उक्ताः**— कथिताः; **शरीरिणः**— देहिनः; **अनाशिनः**— विनाशरहितस्य; **अप्रमेयस्य**— अपरिच्छिन्नस्य; **तस्मात्**— अतः; **युध्यस्व**— युद्धं कुरु; **भारत**— हे भरतवंशज|

**हे भारत! नित्यस्यानाशिनोऽप्रमेयस्य शरीरिण इमे देहा अन्तवन्त उक्तास्तस्माद्युध्यस्व|**

**तात्पर्यम्**— स्वभावेन शरीरं नश्वरम्| सद्यो वा शतवर्षेभ्योऽनन्तरं वा तन्नश्येत्| अत्र काल एव प्रमाणम्| अनन्तकालं तद्धारणमसम्भवम्| आत्मा त्वेतावान् सूक्ष्मो यच्छत्रुणा द्रष्टुमप्यशक्यः किमुत हन्तुम्| यथोक्तं पूर्वपद्ये स एतावान् सूक्ष्मो यत्तत्परिमाणग्रहणप्रकारः केनापि नैव ज्ञातम्| एवंभूत उभयोर्दृष्ट्योः शोकनिमित्तं नास्ति जीवस्य स्वभावेनाहन्तव्यत्वाद्देहस्य ध्रुवमरक्षणीयत्वाच्च| अखण्डाध्यात्मस्य सूक्ष्मकणः स्वकर्मणेदं शरीरमाप्नोति तस्माद्धर्मनियमाः पालनीयाः| वेदान्तसूत्रे जीवो ज्योतिरिति प्रतिपादितः परमज्योतेर्विभिन्नांशत्वात्| यथैव सूर्यज्योतिषा निखिलब्रह्माण्डधारणं तथैवात्मज्योतिषा शरीरधारणम्| यावदात्मा शरीरान्निःसरति तावत्तन्नशितुमारभते| अत आत्मैव शरीरधारणहेतुः| शरीरं स्वयमर्थहीनमेव| युध्यस्वेति लौकिकाय दैहिकाय प्रयोजनाय धर्मं मा त्यजेति चार्जुनायोपदिष्टम्|

**य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्|**

**उभौ तौ न विजानीतो नायं हन्ति न हन्यते||१९||**

**यः**— यादृशः; **एनम्**— इमम्; **वेत्ति**— जानाति; **हन्तारम्**— वधकम्; **यः**— यादृशः; **च**— अपि; **एनम्**— इमम्; **मन्यते**— चिन्तयति; **हतम्**— व्यापादितम्; **उभौ**— द्वौ; **तौ**— अमू; **न**— न कदाचन; **विजानीतः**— बोधतः; **न**— न कदाचन; **अयम्**— एषः; **हन्ति**— मारयति; **न**— न च; **हन्यते**— मार्यते|

**य एनमात्मानं हन्तारं वेत्ति यश्चैनं हतं मन्यते तावुभौ न विजानीतो यदयं न हन्ति न च हन्यते|**

**तात्पर्यम्**— प्राणहारिशस्त्रैर्देहिनि पीडिते सति शरीरान्तःस्थो जीवो न हन्यत इति ज्ञेयम्| आत्मनोऽतिसूक्ष्मत्वात् केनचिच्छस्त्रेण स हन्तुमशक्य इत्यग्रे प्रकटं भविष्यति| न च जीवो हन्तुं शक्यस्तदध्यात्मस्वभावात्| यत्तु हतं हतकल्पं वा तच्छरीरमेव| एतत्तु शरीरवधं न खलु प्रोत्साहयति| "मा हिंस्यात् सर्वा भूतानि" इति वेदविधिः| न च जीवावध्यत्वबोधः पशुवधं प्रोत्साहयति| अधिकारं विना कस्यचिच्छरीरस्य वधो निन्दनीयो राज्यभगवतोश्च विधानेन दण्डनीयः| अर्जुनस्तु धर्मविधिना युद्धनियुक्तो न च स्वच्छन्दम्|

**न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः|**

**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे||२०||**

**न**— न कदाचित्; **जायते**— उत्पद्यते; **म्रियते**— नष्यति; **वा**— अथवा; **कदाचित्**— कस्मिंश्चित् काले; **न**— न कदाचन; **अयम्**— एषः; **भूत्वा**— उत्पद्य; **भविता**— भविष्यति; **वा**— अथवा; **न**— न च; **भूयः**— पुनः; **अजः**— अजन्मा; **नित्यः**— सनातनः; **शाश्वतः**— ध्रुवः; **अयम्**— एषः; **पुराणः**— प्राचीनतमः; **न**— न कदाचन; **हन्यते**— मार्यते; **हन्यमाने**— हते सति; **शरीरे**— देहे|

**अयमात्मा कदाचिन्न जायते वा न म्रियते वा न भूत्वा भूयो भविता| शरीरे हन्यमानेऽयमजो नित्यः शाश्वतः पुराण आत्मा न हन्यते|**

**तात्पर्यम्**— गुणतः परमात्मसूक्ष्मविभिन्नांशयोरेकत्वं वर्तते| शरीरवत् प्रत्यगात्मनो विकारो नैव| क्वचिदात्मा कूटस्थ इत्युच्यते| देहः षड्विकारवशगः— स मातृदेहादुत्पद्यते किञ्चित् कालमवतिष्ठते वर्धते सन्तानरूपं परिणाममुत्पादयति क्रमशः क्षीयतेऽन्ते नश्यति चेति| आत्मा त्वेवं नैव परिवर्तते| आत्मा न जायते किन्तु शरीरधारणत्वाच्छरीरमेव जायते| तत्रात्मा न जायते न च म्रियते| यस्य यस्य जन्म तस्य तस्य मृत्युश्च| आत्मनो जन्मराहित्यात्तस्य भूतवर्तमानभविष्यकालाभावः| स नित्यः शाश्वतः पुरातनस्ततस्तस्योत्पन्नत्वस्येतिहासो न विद्यते| शरीरप्रभावेन प्रत्यगात्मनो जन्मादीतिहासोऽन्विष्यते| आत्मा कदाचन वृद्धत्वं न गच्छति शरीरवत्| ततः प्रतीतो वृद्धस्तमेव भावमनुभवति यथा कौमारे यौवने वा| शरीरविकारा आत्मानं नाभिभवन्ति| आत्मा वृक्षवज्जडवस्तुवद्वा नैव क्षीयते| आत्मनो गौणफलमपि न विद्यते| सन्तानरूपेणात्मगौणफलान्यपि विभिन्नात्मन एव शरीरत्वाच्च विशिष्टनरस्य

सन्तानरूपेणाविर्भवन्ति| आत्मोपस्थितत्वाच्छरीरवर्धनम्| आत्मनस्तु न सन्तानो न विकारः| अत आत्मा शरीरषड्विकारहीनः| कठोपनिषदि (१.२.१८) एवमुक्तम्—

न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित्|

अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे|| इति|

अस्य भावार्थस्तात्पर्यं च भगवद्गीतापद्यसदृशे| अत्र तु विपश्चिदिति शब्दो विशिष्ट एव ज्ञानवदर्थे|

आत्मा ज्ञानमयोऽथवा सदैव चेतनामयः| तस्माच्चेतना प्रत्यगात्मलक्षणम्| हृदन्तःस्थात्मन्यदृश्येऽपि तदुपस्थितिश्चेतनोपस्थितिमात्रेणावगन्तुं शक्या| कदाचन मेघकारणादन्यकारणाद्वा सूर्य आकाशेऽदृश्यः किन्तु तत्र तत्प्रकाशः सदैवानुभूयते येन दिनकालानुभवः सिद्धः| प्रातर्यावदाकाशे लघुप्रकाशः स्यात्तावत्तत्र सूर्योपस्थितिरवगन्तुं शक्या| तथैव मनुष्येषु तिर्यक्सु वा सर्वशरीरेषु चेतनात्वादात्मोपस्थितिरवगन्तुं शक्या| इयं त्वात्मचेतना परमेश्वरचेतनातो भिन्ना तस्य भूतवर्तमानभविष्यपूर्णज्ञानत्वात्| प्रत्यगात्मचेतना विस्मरणप्रवणा| स्वयाथात्म्यविस्मृतो भूत्वा स श्रीकृष्णस्य परमोपदेशेभ्यः शिक्षां प्रबोधं चाप्नोति| श्रीकृष्णस्तु विस्मृतात्मवन्नैव| अन्यथा तदुपदेशरूपा भगवद्गीता वृथा स्यात्|

आत्मा द्विविधः| अण्वात्मा विभ्वात्मा चेति| कठोपनिषदि (१.२.२०) दृढीकृतमेतत्—

अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम्|

तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः|| इति|

श्रीकृष्णः परमात्मनोऽपि प्रभव इत्युत्तराध्यायेषु प्रकटं भविष्यति| अर्जुनस्तु स्वयाथात्म्यविस्मृताण्वात्मैव ततः श्रीकृष्णेन वा सद्गुरुरूपेण तत्प्रतिनिधिना वा प्रबोधनीयः|

**वेदाविनाशिनं नित्यं य एनमजमव्ययम्|**

**कथं स पुरुषः पार्थ कं घातयति हन्ति कम्||२१||**

**वेद**— जानाति; **अविनाशिनम्**— अनश्वरम्; **नित्यम्**— शाश्वतम्; **यः**— यादृशः; **एनम्**— एतमात्मानम्; **अजम्**— अजन्मानम्; **अव्ययम्**— निर्विकारम्; **कथम्**— किं नु; **सः**— असौ; **पुरुषः**— नरः; **पार्थ**— हे अर्जुन; **कं घातयति**— कस्य हननं कारयति; **हन्ति कम्**— कं व्यापादयति|

**हे पार्थ! य एनमविनाशिनं नित्यमजमव्ययं वेत्ति स पुरुषः कं घातयति कं हन्ति कथं वा|**

**तात्पर्यम्**— सर्ववस्तूनामुचितप्रयोगे सति पूर्णज्ञानस्थो वस्तुविशेषस्य प्रयोगस्यौचित्येन स्थानं प्रकारं च वेत्ति| तथैव हिंसाया अपि प्रयोगो विद्यते तत्प्रकारश्च ज्ञानिभिर्निर्णीयते| यद्यपि न्यायाध्यक्षेण वधकप्राणदण्डो विधीयते तथापि न्यायाध्यक्षो नैव निन्दनीयो न्यायविधानानुसारवधाज्ञापनात्| वधकप्राणदण्डो विधेयो येनामुत्र स कृतमहापापैर्दुःखं न भुञ्जीतेति मनुष्यताकृते न्यायग्रन्थे मनुसंहितायां समर्थितम्| अतो वधकोद्बन्धनदण्डो नृपाज्ञया तत्त्वतो हितकरः| तथैव यदा श्रीकृष्णो युद्धमज्ञापयति तदा सा हिंसा परमन्यायकृते भवेदिति ज्ञेयम्| तथा श्रीकृष्णार्थं युद्धे कृतहिंसा न खलु हिंसा यतो येन केन प्रकारेण मनुष्य आत्मा वा हन्तुमशक्य इति सम्यग् ज्ञात्वार्जुनेन स आदेशः पालनीयः| एवं न्यायानुष्ठानकृते प्रतीता हिंसानुमोदिता| शल्यक्रिया न रोगिणो वधायापि तु तदुपचाराय| अतः श्रीकृष्णादेशानुसारेणार्जुनस्य कर्तव्यं युद्धं ज्ञानान्वितम्| एवंभूते पापफलं तत्रासम्भवम्|

**वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि|**

**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही||२२||**

**वासांसि**— वस्त्राणि; **जीर्णानि**— जर्जराणि; **यथा**— यद्वत्; **विहाय**— त्यक्त्वा; **नवानि**— नूतनानि; **गृह्णाति**— स्वीकरोति; **नरः**— मनुष्यः; **अपराणि**— अन्यानि; **तथा**— तद्वत्; **शरीराणि**— देहान्; **विहाय**— त्यक्त्वा; **जीर्णानि**— वृद्धानि व्यर्थानि च; **अन्यानि**— भिन्नानि; **संयाति**— आप्नोति; **नवानि**— नूतनानि; **देही**— देहधारी|

**यथा नरो जीर्णानि वासांसि विहाय नवानि वासांसि गृह्णाति तथा देही जीर्णानि शरीराणि विहायान्यानि नवानि शरीराणि संयाति|**

**तात्पर्यम्**— सूक्ष्मात्मनः शरीरपरिवर्तनमभिमतं सत्यम्| आत्मास्तित्वाविश्वासिनोऽर्वाचीनविज्ञानिनो हृदयशक्तिप्रभवं व्याख्यातुमसमर्था एव तथापि तैरपि कौमारपौगण्डयौवनजरारूपाः शरीरनिरन्तरविकारा स्वीकार्याः| जरातस्तत्परिवर्तनमन्यशरीरं तावत् संक्रामति| एतत् पूर्वमेव व्याख्यातम् (२.१३)|

अण्वात्मनोऽन्यशरीरसंक्रान्तिः परमात्मकृपया सम्भवति| यथा मित्रमन्यस्येच्छां पूरयति तथाण्वात्मन इच्छां पूरयति परमात्मा| मुण्डकोपनिषदि श्वेताश्वतरोपनिषदि चात्मपरमात्मानौ वृक्षासीनद्विपक्षिवदिति दृष्टान्तेन वर्ण्येते| अण्वात्मरूपेण पक्षी वृक्षफलानि भक्षयत्यन्यश्च श्रीकृष्णः केवलं मित्रमवलोकते| द्वौ समगुणवद्भूतावपि तयोरेकः संसाररूपवृक्षफलाकृष्ट एवान्यस्तु केवलं स्वमित्रकर्मसाक्षी| श्रीकृष्णः साक्षिपक्षी भक्षकपक्षी त्वर्जुनः| यद्यपि द्वौ सखायावेव तथापि तयोरेकः स्वाम्यन्यश्च दासः| वृक्षवच्छरीरादन्यशरीरं प्रति स्थानपरिवर्तने हेतुरण्वात्मन एतस्य सम्बन्धस्य विस्मरणम्| जीवात्मा शरीररूपे वृक्षेऽतिकष्टेन श्राम्यति| यावत्तु सोऽन्यं पक्षिणं परमगुरुरूपेण स्वीकरोति यथार्जुनः स्वेच्छयोपदेशार्थं कृष्णं शरणं गतस्तावत् सोऽधीनपक्षी सद्यः सर्वशोकमुक्तो भवति| मुण्डकोपनिषदि (३.१.२) श्वेताश्वतरोपनिषदि (४.७) च दृढीकृतमेतत्—

समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः|

जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः|| इति|

अत्रार्जुनः स्वनित्यमित्रकृष्णाभिमुखी भूत्वा तत्सकाशाद् भगवद्गीतामवगच्छति| एवं श्रीकृष्णसकाशाच्छृण्वन् स भगवत्परममहिमानमवगत्य शोकमुक्तो भवितुमर्हति| वृद्धयोः पितामहाचार्ययोः शरीरपरिवर्तने न शोचनीयमित्यत्रार्जुनायोपदिश्यते भगवता| प्रत्युत धर्मयुद्धे तच्छरीरवधेन हर्षो भवेत्तयोः सद्यो विविधदैहिककर्मफलशुद्धेः| यज्ञवेद्यां धर्मयुद्धभूमौ वा प्राणत्यागो यस्य स सद्यः दैहिककर्मफलशुद्धो भूत्वोत्कृष्टावस्थां याति| एवमर्जुनस्य शोकनिमित्तं नैवासीत्|

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः|**

**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः||२३||**

**न**— न कदाचित्; **एनम्**— इममात्मानम्; **छिन्दन्ति**— खण्डसात् कुर्वन्ति; **शस्त्राणि**— आयुधानि; **न**— न कदाचित्; **एनम्**— इमम्; **दहति**— तापयति; **पावकः**— अग्निः; **न**— न कदाचित्; **च**— अपि; **एनम्**— इमम्; **क्लेदयन्ति**— आर्द्रीकुर्वन्ति; **आपः**— जलम्; **न**— न कदाचित्; **शोषयति**— शुष्कं करोति; **मारुतः**— वायुः|

**न शस्त्राणि कदाचिदेनमात्मानं छिन्दन्ति न पावक एनं दहति नापा एनं क्लेदयन्ति न च मारुत एनं शोषयति|**

**तात्पर्यम्**— खड्गाग्नेयवर्षचक्रवातादिसर्वविधशस्त्राणि जीवात्मानं हन्तुमसमर्थानि| अर्वाचीनाग्नेयास्त्रेभ्यो व्यतिरिक्तं मृण्मयजलमयाकाशमयवायु मयादिविविधास्त्राण्यासन्निति प्रतिभाति| अर्वाचीनयुगनाभिकीयास्त्राण्यप्याग्नेयास्त्रेषु गण्यन्ते| पुरा तु विभिन्नभौतिकद्रव्यमयान्यन्यास्त्राण्यासन्| आग्नेयास्त्राण्यर्वाचीनविज्ञानाज्ञातैर्जलास्त्रैः प्रतिरुद्ध्यन्ते स्म| न चार्वाचीनविज्ञानिनश्चक्रवातास्त्राणि विदन्ति| तथापि वैज्ञानिकोपायाननादृत्यात्मा खण्डसाच्छेतुमसंख्यशस्त्रैर्वा नाशयितुमशक्यः|

प्रत्यगात्मनोऽज्ञानमात्रेण संसारागमनप्रकारं फलतश्च तन्मायावरणमिति मायावादिनो व्याख्यातुं न प्रभवन्ति| न चादिपरमात्मनः प्रत्यगात्मनो विच्छेतुं कदाचन शक्यम्| प्रत्युत प्रत्यगात्मानः शाश्वतं परमात्मनो विभिन्नांशाः| नित्याण्वात्मत्वेन ते मायावरणप्रवणा येन परमेश्वरसङ्गविच्युता भवन्ति पावकान्निःष्ता नाशप्रवणाः स्फुलिङ्गा इव पावकैकगुणत्वेनापि| जीवात्मानः परमेश्वरविभिन्नांशा एवेति वराहपुराणे वर्णितम्| भगवद्गीतानुसारेणापि ते शाश्वतमेवंभूताः| तथा मायामुक्ता भूत्वापि जीवात्मानः पृथग्व्यक्तिरूपेणावतिष्ठन्त इत्यर्जुनाय भगवदुपदेशो स्फुटम्| श्रीकृष्णप्राप्तज्ञानेनार्जुनो मुक्तो भूत्वापि श्रीकृष्णेन सहैकत्वं कदाचन न गतः|

**अच्छेद्योऽयमदाहयोऽयमक्लेद्योऽशोष्य एव च|**

**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः||२४||**

**अच्छेद्यः**— छेत्तुमशक्यः; **अयम्**— एषः; **अदाह्यः**— दग्धुमशक्यः; **अयम्**— एष आत्मा; **अक्लेद्यः**— क्लेदयितुमशक्यः; **अशोष्यः**— शोषयितुमशक्यः; **एव**— अवश्यम्; **च**— अपि; **नित्यः**— शाश्वतः; **सर्वगतः**— सर्वव्यापी; **स्थाणुः**— अपरिवर्तनीयः; **अचलः**— स्थिरः; **अयम्**— एष आत्मा; **सनातनः**— शाश्वतः|

**अयमात्माच्छेद्योऽदाह्योऽक्लेद्योऽशोष्यो नित्यः सर्वगतः स्थाणुरचलः सनातनश्चैव|**

**तात्पर्यम्**— एतैः सर्वैर्लक्षणैः सूक्ष्मात्मनोऽखण्डब्रह्मणो नित्याणुत्वमपरिवर्तनीयाणुत्वरूपस्थितिं चावश्यं सिद्धे| अत्राद्वैतमतं दुःसाध्यमात्मपरमात्मैकाकारत्वासम्भवात्| संसारकल्मषोद्धारादनन्तरं सूक्ष्मात्मा श्रीपुरुषोत्तमज्योतिष्याध्यात्मिकस्फुलिङ्गवदवस्थातुमिच्छेत् परन्तु धीमन्तो जीवा भगवत्सङ्गार्थं वैकुण्ठलोके प्रविशन्ति| असंशयमीश्वरसृष्टिसर्वस्थानजीवोपस्थित्या सर्वगतशब्दो महार्थः| ते भूमौ जल आकाशे पृथ्व्यभ्यन्तरेऽग्नावपि जीवन्ति| अग्निना जीवदहनमिति प्रत्ययोऽत्र न स्वीक्रियते तददाह्यत्वविशदोक्तेः| अत एवासंशयं सूर्यलोकेऽप्युचितशरीरयुक्तजीवा विद्यन्ते| सूर्यलोकनिर्जनत्वं स्याच्चेत्तर्हि सर्वगतशब्दानुपपत्तिः|

**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते|**

**तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि||२५||**

**अव्यक्तः**— अदृश्यः; **अयम्**— एष आत्मा; **अचिन्त्यः**— अकल्पनीयः; **अयम्**— एष आत्मा; **अविकार्यः**— अपरिवर्तनीयः; **अयम्**— एष आत्मा; **उच्यते**— कथ्यते; **तस्मात्**— अतः; **एवम्**— इत्थम्; **विदित्वा**— ज्ञात्वा; **एनम्**— इममात्मानम्; **न**— न खलु; **अनुशोचितुम्**— विलप्तुम्; **अर्हसि**— त्वय्युपपद्यते |

**अयमात्माव्यक्तोऽचिन्त्योऽविकार्य उच्यते तस्मात्त्वमेवमेनं विदित्वानुशोचितुं नार्हसि|**

**तात्पर्यम्**— यथा पूर्वं वर्णितमात्मपरिमाणातिसौक्ष्म्यादधिकतमसूक्ष्मदर्शियन्त्रेणापि तद्दर्शनासम्भवः| अत एव सोऽव्यक्तः| आत्मास्तित्वमधिकृत्य श्रुतिप्रमाणव्यतिरिक्तं प्रत्यक्षप्रमाणेन तत् प्रतिपादयितुमशक्यम्| इदं सत्यं स्वीकरणीयमात्मास्तित्वबोधान्यप्रमाणाभावाद्यद्यप्यनुभवेन तत् सिद्धम्| नानाविषयेष्वाप्त एव प्रमाणम्| मातृप्रमाणमूलत्वेन पितुरस्तित्वमस्वीकर्तुमशक्यम्| मातृप्रमाणमृते पितृपरिचयार्थमन्यत् प्रमाणं नैव| तथैव वेदाध्ययनव्यतिरिक्तमात्मबोधार्थमन्यत् प्रमाणं नैव| अर्थान्मानुषप्रत्यक्षज्ञानेनात्माचिन्त्यः| आत्मा चेतनैव सचेतनश्चेति वेदोक्तिस्तस्मात् स्वीकरणीया| शरीरविकारविपरीतमात्मविकारो नैव| नित्याविकार्यत्वेनात्मानन्तपरमात्मापेक्षयाणुरूपेण तिष्ठति| परमात्मानन्तोऽण्वात्मा त्वत्याणवः| अतोऽविकार्यत्वेनाण्वात्मा पुरुषोत्तमेनानन्तात्मना तुल्यः कदाचन भवितुं नार्हति| आत्मस्वभावस्थायित्वदृढीकरणार्थमेव वेदेषु विभिन्नप्रकारैरस्य भावस्य पुनरुक्तिः श्रूयते| भ्रमं विना कस्यचिद्विषयस्य पुनरुक्तिरपेक्ष्यते सम्यग् बोधार्थम्|

**अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्|**

**तथापि त्वं महाबाहो नैनं शोचितुमर्हसि||२६||**

**अथ**— यदि; **च**— अपि; **एनम्**— इममात्मानम्; **नित्यजातम्**— सदैवोत्पन्नम्; **नित्यम्**— शाश्वतम्; **वा**— अथवा ; **मन्यसे**— चिन्तयसि; **मृतम्**— नष्टम्; **तथापि**— एवम्भूतेऽपि; **त्वम्**— भवान्; **महाबाहो**— हे प्रबलभुज; **न**— न कदाचन; **एनम्**— इममात्मानम्; **शोचितुम्**— विलप्तुम्; **अर्हसि**— त्वय्युपपद्यते|

**हे महाबाहो! यदि तु त्वमेनमात्मानं नित्यजातं नित्यं मृतं वा मन्यसे तथापि त्वमेनं शोचितुं नार्हसि|**

**तात्पर्यम्**— शरीरव्यतिरिक्तमात्मास्तित्वं नैवेति बौद्धसदृशस्य सदा विद्यमानस्य कस्यचिद्वादिवर्गस्य मतम्| यदा भगवाञ् श्रीकृष्णो गीतां प्रोवाच तदा लोकायतिकनाम्ना वैभाषिकनाम्ना च प्रसिद्धास्तादृशवादिन आसन्निति प्रतिभाति| भौतिकद्रव्यसंयोगविशिष्टपरिपक्वावस्थायां जीवनलक्षणानि घटन्त इति तन्मतम्| अर्वाचीनलौकिकयोर्विज्ञानिदर्शनज्ञयोर्मतमप्येतादृशम्| तदनुसारेण शरीरं भौतिकतत्त्वसंयोग एव भौतिकरासायनिकतत्त्वसंयोगेन च विशिष्टावस्थायां जीवनलक्षणानि विकसन्ति| नृतत्त्वविज्ञानमेतद्दर्शनमूलकम्| अधुना पाश्चात्यदेशेषु लोकप्रियभूता अनेके कपटधर्मा अस्य दर्शनस्य भक्तिहीनबौद्धशून्यवादस्य चानुयायिनः| यद्यप्यर्जुनो वैभाषिकदर्शनवदात्मास्तित्वे न विश्वस्यात्तथापि शोकनिमित्तं न भवेत्| न कोऽपि रसायनाल्पमात्राक्षतिमनुशोचति न च तया स्वनियतकर्मानुष्ठानाद्विरमति| प्रत्युतार्वाचीने विज्ञाने वैज्ञानिकयुद्धे च शत्रुविजयप्राप्तये रसायनबहुराशयः क्षीयन्ते| वैभाषिकदर्शनानुसारेण प्रतीत आत्मा शरीरक्षये सति नश्यति| यद्यर्जुनोऽण्वात्मास्तित्वं वैदिकसिद्धान्तं स्वीकुर्याद्वा तस्मिन्न विश्वस्याद्वा तस्य शोकनिमित्तं नैव| एतन्मतानुसारेण यस्मात् प्रतिक्षणं बहवो जीवा उत्पद्यन्ते प्रतिक्षणं बहवो नश्यन्ति च तस्मात्तादृशघटनासु शोको न भवेत्| आत्मनः पुनर्जन्म न स्याच्चेत् पितामहगुरुवधपापदोषभयादर्जुनशोकनिमित्तं नैव| तथापि तु श्रीकृष्णो व्यङ्ग्यपूर्वकमर्जुनं महाबाहुनाम्ना सम्बोधयति यतोऽर्जुनस्तावद्वैदिकज्ञानप्रतिकूलवैभाषिकमतं न स्वीचकार| अर्जुनस्य क्षत्रियत्वेन वैदिकसंस्कृतिसम्बद्धत्वात्तद्विधानपालनं तस्यानुरूपमेव|

**जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च|**

**तस्मादपरिहायेऽर्थे न त्वं शोचितुमर्हसि||२७||**

**जातस्य**— उत्पन्नस्य; **हि**— अवश्यम्; **ध्रुवः**— निश्चितः; **मृत्युः**— मरणम्; **ध्रुवम्**— निश्चितम्; **जन्म**— जनिः; **मृत स्य**— उपरतस्य; **च**— अपि; **तस्मात्**— ततः; **अपरिहार्ये**— अवश्यम्भाविनि; **अर्थे**— विषये; **न**— खलु; **त्वम्**— भवान्; **शोचितुम्**— विलप्तुम्; **अर्हसि**— त्वय्युपपद्यते |

**जातस्य मृत्युर्ध्रुवो हि मृतस्य च जन्म ध्रुवं तस्मादपरिहार्ये कार्ये त्वं शोचितुं नार्हसि|**

**तात्पर्यम्**— स्वकर्मानुगुणेण जन्म ग्रहणीयम्| कर्मविशिष्टावधिसमाप्तौ सत्यां च पुनर्जन्मार्थं मृत्युर्भवेत्| अनेन प्रकारेण मोक्षप्राप्तिं विना जीवः संसारचक्रे निरन्तरमवतिष्ठते| इदं चक्रं त्वनावश्यके वधयुद्धे नैव समर्थयते| तथापि तु युद्धमहिंसा च मानुषसमाजन्यायव्यवस्थापालनार्थमपरिहार्ये| भगवदिच्छया कुरुक्षेत्रयुद्धमपरिहार्यमेवासीद्धर्मयुद्धं च क्षत्रियकर्तव्यतैव| स्वकर्तव्यमनुतिष्ठत्यर्जुने किमर्थं स्वजनमरणे शोको भयं वा भवेत्| स विधिमुल्लङ्घयितुं नार्हति येन पापफलमुद्भवेद्यस्मात् सोऽतिभीतः| विहितकर्तव्यानुष्ठानत्यागेन स स्वजनमृत्युमवरोद्धुं समर्थो न भवेदपि तूत्पथकर्मवरणेन भ्रंशेत|

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत|**

**अव्यक्तनिधनान्येव तत्र का परिदेवना||२८||**

**अव्यक्त+आदीनि**— आदाउ न व्यक्तिर्येषां तानि; **भूतानि**— प्राणिनः; **व्यक्त+मध्यानि**— मध्ये व्यक्तिर्येषां तानि; **भारत**— हे भरतवंशज; **अव्यक्त+निधनानि**— संहारेऽव्यक्तिर्येषां तानि; **एव**— हि; **तत्र**— ततः; **का**— किमर्थम्; **परिदेवना**— शोकः|

**हे भारत! भूतान्यादावव्यक्तानि मध्ये व्यक्तानि निधने चाव्यक्तान्येव तत्र का परिदेवना|**

**तात्पर्यम्**— आत्मास्तित्वविश्वासिन आत्मास्तित्वाविश्वासिनश्चेति दार्शनिकवर्गद्वयमिति स्वीकृत्वाप्युभयत्र शोकनिमित्तं नैव| आत्मास्तित्वाविश्वासिनो नास्तिका उच्यन्ते वेदज्ञानमार्गानुयायिभिः| युक्त्यर्थं नास्तिकमते स्वीकृतेऽपि शोकनिमित्तं नैव| आत्मनः पृथगस्तित्वादतिरिक्तं सृष्टेः पूर्वं भौतिकतत्त्वान्यव्यक्तरूपेणावतिष्ठन्ते| अस्याः सूक्ष्माव्यक्तावस्थाया व्यक्तावस्थोद्भवति यथाकाशाद्वायुस्ततोऽग्निस्ततो जलं ततः पृथ्वी| पृथ्व्या नानोद्भवा घटन्ते| तथा हि विशालगगनचुम्बिभवनं पृथ्व्या उद्भवति| तस्मिन्नष्टे सति तदाविष्करणं पुनरव्यक्तं भूत्वान्तिमावस्थायामणुरूपेणावतिष्ठते| शक्तिसंरक्षणनियमोऽवतिष्ठते परन्तु कालक्रमेण वस्तूनि व्यक्तान्यव्यक्तानि च भवन्ति| अयमेव भेदः| एवम्भूते व्यक्तावस्थायां वाव्यक्तावस्थायां वा शोकनिमित्तं किं स्यात्? येन केन प्रकारेणाव्यक्तावस्थायामपि वस्तूनामभावो नैव| आदावन्ते च तान्यव्यक्तानि मध्ये चैव व्यक्तानि यस्मात् कश्चन यथार्थविशेषो नैव|

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिण इति भगवद्गीतोक्तवैदिकसिद्धान्तं स्वीकृत्य शरीरस्य वस्त्रतुल्यत्वं सदैव स्मरणीयम्| अतः किमर्थं वस्त्रपरिवर्तने शोकः? नित्यात्मापेक्षया शरीरस्य यथार्थास्तित्वं न हि| तत् स्वप्नवदेव| गगन उड्डयेऽहमिति रथोपविष्टो राजाहमिति वा स्वप्ने कल्पयेयं जागरणे तु तथा नेत्यनुभूयते| वैदिकज्ञानं शरीरानस्तित्वमूलत्वेनात्मसाक्षात्कारं प्रोत्साहयति| तत आत्मास्तित्वे विश्वासो वा न वोभयत्र शोकनिमित्तं नैव|

**आश्चर्यवत् पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः|**

**आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित्||२९||**

**आश्चर्यवत्**— यथाद्भुतम्; **पश्यति**— अवलोकते; **कश्चित्**— कश्चन; **एनम्**— इममात्मानम्; **आश्चर्यवत्**— यथाद्भुतम्; **वदति**— भाषते; **तथा**— एवम्; **एव**— हि; **च**— अपि; **आश्चर्यवत्**— यथाद्भुतम्; **च**— अपि; **एनम्**— इमम्; **अन्यः**— परः; **शृणोति**— आकर्णयति; **श्रुत्वा**— आकर्ण्य; **अपि**— यद्यपि; **एनम्**— इममात्मानम्; **वेद**— जानाति; **न**— न कदाचन; **च**— अपि; **एव**— हि; **कश्चित्**— कश्चन|

**कश्चिदेनमात्मानमाश्चर्यवत् पश्यत्यन्यश्च तथैवाश्चर्यवद्वदत्यन्यश्चैनमाश्चर्यवच्छृणोति कश्चिच्च श्रुत्वाप्येनं नैव वेद|**

**तात्पर्यम्**— गीतोपनिषद उपनिषत्सिद्धान्तमूलकत्वेन कठोपनिषद्यपि सदृशोक्तिर्श्रूयते (१.२.७)—

श्रवणयापि बहुभिर्यो न लभ्यः शृण्वतोऽपि बहवो यं न विद्युः|

आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्योऽस्य ज्ञाता कुशलानुशिष्टः|| इति|

विशालपशुशरीरे विशालन्यग्रोधेऽङ्गुष्ठमात्रदेशस्थकोटिसूक्ष्मजन्तुषु चाण्वात्मोपस्थित इति सत्यमवश्यमेवाश्चर्यम्| अल्पज्ञास्तपोहीनाश्च ज्ञानोत्तमाधिकारिणा ब्रह्माण्डस्यादिजीवस्य ब्रह्मणोऽप्युपदेशकेन व्याख्यातमपि पृथक्सूक्ष्मात्मनोऽद्भुतमवगन्तुमशक्याः| तत्त्वविषये स्थूललौकिकबुद्धित्वादस्मिन् युगे प्रायशो जनास्तादृशसूक्ष्मकणस्यैतावद्विशालभूतत्वप्रकारमल्पभूतत्वप्रकारं च कल्पयितुं न प्रभवन्ति| एवमात्मा स्वभावं वर्णनं वाधिकृत्याश्चर्यवन्मन्यते| मायामोहितानामिन्द्रियविषयेष्वतिनिमग्नत्वादात्मसाक्षात्कारजिज्ञासार्थमल्पसमय एव यद्यप्यात्मज्ञानं विना लौकिकप्रयासेऽन्ततः सर्वकर्मणां परिणामः पराजयो हि| आत्मा ध्येय एव संसारदुःखनिरोधसाधनायेति कल्पनापि कदाचित्तेषां नैव|

केचनात्मविषयश्रवणप्रवणाः सत्सङ्गे प्रवचनं शृणुयुः किन्तु क्वचिदात्मपरमात्मनोः परिमाणाभिन्नत्वं स्वीकृत्य पथभ्रष्टा भवन्ति| परमात्मपदमात्मानं तत्तत्कार्यसम्बन्धौ च सविस्तरं सर्वथावगच्छति यः सोऽतिदुर्लभः| पुनरात्मज्ञानं प्राप्य विभिन्नप्रकारैस्तत्तत्त्वं व्याख्यातुं समर्थो यः स दुर्लभतरोऽपि| किन्तु येन केन प्रकारेणात्मविषयोऽवगन्तुं शक्यते चेत्तर्हि जीवनं सिद्धार्थं भवति|

आत्मविषयबोधाय तु सरलतमा पद्धतिः परमाधिकारिणा श्रीकृष्णेनोक्ताया भगवद्गीतायाः स्वीकार एवान्यवादपथभ्रंशविचलनेन विना| श्रीकृष्णो भगवान् स्वयमिति स्वीकारात् पूर्वं त्वस्मिनेव जन्मनि पूर्वस्मिन् वा बहुतपोयज्ञानामवश्यकता हि| श्रीकृष्णस्तु यथारूपं शुद्धभक्तस्याहैतुककृपयैव ज्ञातुमर्हो न त्वन्यथा|

**देही नित्यमवध्योऽयं देहे सर्वस्य भारत|**

**तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि||३०||**

**देही**— शरीरधारी; **नित्यम्**— शाश्वतम्; **अवध्यः**— वधो यस्याशक्यः सः; **अयम्**— एष आत्मा; **देहे**— शरीरे; **सर्वस्य**— प्रत्येकस्य; **भारत**— हे भरतवंशज; **तस्मात्**— ततः; **सर्वाणि**— समस्तानि; **भूतानि**— प्राणिनः; **न**— न कदाचित्; **त्वम्**— भवान्; **शोचितुम्**— विलप्तुम्; **अर्हसि**— त्वय्युपपद्यते |

**हे भारत! सर्वस्य देहेऽयं देही नित्यमवध्यः| तस्मात्त्वं सर्वाणि भूतानि शोचितुं नार्हसि|**

**तात्पर्यम्**— अत्र श्रीभगवानविकार्यात्मविषयकोपदेशं संहरति| अमरात्मनो नानावर्णनैः श्रीकृष्णस्तदमरत्वं शरीरस्य क्षणिकत्वं च प्रतिपादयति| अत एव क्षत्रियत्वेनार्जुनो युद्धे पितामहाचार्योर्भीष्मद्रोणयोर्मरणभयात् स्वकर्तव्यं न त्यजेत्| श्रीकृष्णप्रमाणेन देहाद् भिन्नस्यात्मनोऽस्तित्वे विश्वासो भवेन्न तु तदनस्तित्वे न वा रसायनसंयोगविशिष्टावस्थाजीवनलक्षणविकासे| आत्मनोऽमरत्वे सत्यपि हिंसा नैव प्रोत्साह्यते किन्तु युद्धकाले तत्त्वत आवश्यकतया तन्निषेधो नैव| सावश्यकता भगवदाज्ञामूलकैव भवेन्न तु स्वच्छन्देन|

**स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि|**

**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते||३१||**

**स्व+धर्मम्**— स्वकर्तव्यम्; **अपि**— च; **च**— हि; **अवेक्ष्य**— मत्वा; **न**— न कदाचित्; **विकम्पितुम्**— आशंकितुम्; **अर्हसि**— त्वय्युपपद्यते; **धर्म्यात्**— धर्मकारणात्; **हि**— अवश्यम्; **युद्धात्**— रणात्; **श्रेयः**— गरीयसी वृत्तिः; **अन्यत्**— किञ्चन परम्; **क्षत्रियस्य**— योधस्य; **न**— न खलु; **विद्यते**— वर्तते|

**स्वधर्ममप्यवेक्ष्य त्वं विकम्पितुं नार्हसि हि धर्म्याद्युद्धात् क्षत्रियस्यान्यच्छ्रेयो न विद्यते|**

**तात्पर्यम्**— चतुर्वर्णेषु सुशासनाय द्वितीयवर्णः क्षत्रिय उच्यते| क्षच्छब्दः क्षत्यर्थे| क्षतेस्त्रायत इति क्षत्रियः| वने क्षत्रियाणां वधप्रशिक्षणं भवति| क्षत्रियो वनं गत्वा युद्धार्थं व्याघ्रमाहूय मुखामुखि तेन सह खड्गेन युध्यते स्म| हतव्याघ्राय राजयोग्यान्त्येष्टिर्विधीयते स्म| अद्यापि जयपुरराज्यस्य राजभिरियं पद्धतिः पाल्यते| विशेषतो युद्धार्थमाह्वाने वधे च क्षत्रियाणां प्रशिक्षणमेव कादाचिकधर्ममूलकहिंसावश्यकतया| अत एव साक्षात् सन्न्यासाश्रमग्रहणाय क्षत्रियाः कदाचन न कल्पन्ते| राजनीतिकाहिंसा कूटनीतिरेव स्यान्न तु कदाचन विधिर्धर्मो वा| आह चैवं स्मृतिः—

आहवेषु मिथोऽन्योन्यं जिघांसन्तो महीक्षितः|

युद्धमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः||

इति मनुसंहितायाम्, ७.८९|

यज्ञेषु पशवो ब्रह्मन् हन्यन्ते सततं द्विजैः|

संस्कृताः किल मन्त्रैश्च तेऽपि स्वर्गमवाप्नुवन्॥

इति महाभारते, ३.३.१९९।

अत एव युद्धभूमिवधो यज्ञपशुवधश्च न खलु हिंसा मन्येते धर्मानुष्ठानेन सर्वेषां कृतार्थत्वात्। नानायोनिक्रमकदेहान्तरप्राप्तिमृते यज्ञीयपशुः सद्यो मानुषरूपमाप्नोति युद्धभूमौ च हताः क्षत्रिया ब्राह्मणोऽपि यज्ञानुष्ठानेन स्वर्गमधिगच्छन्ति।

स्वधर्मो द्विविधः। यावन्मुक्तिर्नैव तावत्तत्प्राप्तये स्वविशिष्टशरीरानुगुणेन धर्मेण कर्तव्यानि पालनीयानि। मुक्तेरनन्तरं तु स्वधर्मः पारमार्थिक एव भवति न च देहात्मबुद्धिमूलकः। देहात्मबुद्ध्यावस्थायां क्षत्रियाणां ब्राह्मणानां चापरिहार्याणि स्वस्वविशिष्टकर्तव्यानि विद्यन्ते। स्वधर्मः श्रीभगवताज्ञाप्यत इति चतुर्थाध्याये स्पष्टं भविष्यति। देहात्मबुद्ध्यावस्थायां स्वधर्मो वर्णाश्रमधर्म उच्यतेऽथवाध्यात्मतत्त्वबोधार्थं प्रथमसोपनम्। देहविशेषगतप्रकृतिगुणमूलकविशिष्टकर्तव्यरूपस्य वर्णाश्रमधर्मस्यावस्थायां मानुषसभ्यता प्रारभते। कस्मिंश्चित् कर्मक्षेत्रे परमादेशानुसारेण स्वविशिष्टधर्मानुष्ठानमुत्कर्षाय कल्पते।

**यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।**

**सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम्॥३२॥**

**यदृच्छया**— स्वतः; **च**— अपि; **उपपन्नम्**— प्राप्तम्; **स्वर्ग+द्वारम्**— स्वर्गकपाटम्; **अपावृतम्**— उद्घाटितम्; **सुखिनः**— हृष्टाः; **क्षत्रियाः**— राजकीयवर्णाः; **पार्थ**— हे पृथापुत्र; **लभन्ते**— प्राप्नुवन्ति; **युद्धम्**— रणम्; **ईदृशम्**— एतादृशम्।

**हे पार्थ! सुखिनः क्षत्रिया यदृच्छया चोपपन्नमपावृतं स्वर्गद्वारमीदृशं युद्धं लभन्ते।**

**तात्पर्यम्**— अस्मिन् युद्धे श्रेयो नानुपश्यामि येन शाश्वतं नारकायैवेति वचनेनार्जुनप्रवृत्तिर्निन्दिता विश्वपरमगुरुभूतेन श्रीकृष्णेन। अर्जुनस्यैतद्वचनमज्ञानहेतुकमेव। विहितधर्मानुष्ठाने सोऽहिंसको भवितुमैच्छत्। युद्धभूमौ क्षत्रियस्याहिंसकभावो मूर्खवादः। महामुनेर्व्यासदेवपितुः पराशरस्य स्मृतौ (१.६१) एवमुक्तम्—

क्षत्रियो हि प्रजा रक्षन् शस्त्रपाणिः प्रदण्डयन्।

निर्जित्य परसैन्यादि क्षितिं धर्मेण पालयेत्॥ इति।

सर्वदृष्ट्यार्जुनस्य युद्धत्यागनिमित्तं नैवासीत्। शत्रूञ् जित्वा राज्यं भुञ्जीत युद्धे मृत्वा वापावृतं स्वर्गद्वारं प्रविशेत्। उभयोर्दशयोर्युद्धं तस्य हितकरम्।

**अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि|**

**ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि||३३||**

**अथ**— अतः; **चेत्**— यदि; **त्वम्**— भवान्; **इमम्**— एतत्; **धर्म्यम्**— धर्मानुरूपम्; **संग्रामम्**— युद्धम्; **न**— न खलु; **करिष्यसि**— अनुतिष्ठसि; **ततः**— तर्हि; **स्वधर्मम्**— स्वकर्तव्यम्; **कीर्तिम्**— यशः; **च**— अपि; **हित्वा**— त्यक्त्वा; **पापम्**— पातकम्; **अवाप्स्यसि**— लप्स्यसे|

**अथ त्वमिमं धर्म्यं संग्रामं न करिष्यसि चेत्ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि|**

**तात्पर्यम्**— बहुभिर्देवैः शिवेनापि च युद्धार्जुनो योधत्वयशः प्राप| व्याधवेशेन शिवेन युद्धा तं जित्वारधित्वा च स वररूपं पाशुपतनामकमस्त्रं जग्राह| स महायोध एवेति लोके प्रसिद्धम्| द्रोणाचार्योऽपि तस्मा आशिर्वादं दत्त्वा गुरुवधशक्तमपि विशिष्टमस्त्रं ददौ| एवं स बहुभिरधिकारिभिः पित्रा स्वर्गराजेनेन्द्रेणापि च युद्धे प्रमाणीकृतः| किन्तु यदि स युद्धं त्यजेत्तर्हि न केवलं क्षत्रियधर्ममपेक्षेतापि तु स्वकीर्तिं चैवं नरकमार्गं गच्छेत्| युद्धात् पलायनेन नरकमधिगच्छेन्न तु युद्धेनेति यावत्|

**अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्|**

**सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते||३४||**

**अकीर्तिम्**— अपयशः; **च**— अपि; **अपि**— परं च; **भूतानि**— लोकाः; **कथयिष्यन्ति**— वदिष्यन्ति; **ते**— तव; **अव्ययाम्**— शाश्वतीम्; **सम्भावितस्य**— मान्यस्य; **च**— अपि; **अकीर्तिः**— अपयशः; **मरणात्**— मृत्योः; **अतिरिच्यते**— अधिकतरा भवेत्|

**भूतानि च तेऽव्ययामकीर्तिं कथयिष्यन्ति सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते|**

**तात्पर्यम्**— अत्र तस्य मित्ररूपेण दर्शनोपदेशकरूपेण च श्रीकृष्णोऽर्जुनस्य युद्धत्यागविषयेऽन्तिमं निर्णयं प्रस्तौति| एतदुक्तं भगवता— हे अर्जुन! यदि त्वं युद्धारम्भात् पूर्वमपि युद्धक्षेत्रं त्यजेस्तर्हि जनास्त्वां कातरं कथयिष्यन्ति| ननु जना मदपवादं कुर्वन्तु किन्त्वहं युद्धात् पलायनेन स्वप्राणा रक्षिष्यामीति चेत्तर्हि युद्धे मरणं श्रेय इति मदुपदेशः| त्वादृशस्य मान्यस्यापयशो मृत्योरधिकतरं भवेत्| एवं प्राणत्यागभयात्त्वं नैव पलायेथा युद्धे मरणस्य श्रेयत्वात्| तदेव मन्मैत्रीकुप्रयोगादकीर्तेः समाजयशोहानेश्च त्वां रक्षिष्यतीति|

एवं युद्धे मरणमेव तव श्रेयो न तु पलायनमिति श्रीभगवदन्तिमनिर्णयोऽर्जुनं प्रति|

**भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः|**

**येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम्||३५||**

**भयात्**— भीतेः; **रणात्**— युद्धात्; **उपरतम्**— विरतम्; **मंस्यन्ते**— चिन्तयिष्यन्ति; **त्वाम्**— भवन्तम्; **महारथाः**— महासेनापतयः; **येषां च**— येषामपि; **त्वम्**— भवान्; **बहु+मतः**— अतिमान्यः; **भूत्वा**— वृत्त्वा; **यास्यसि**— गमिष्यसि; **लाघवम्**— अल्पत्वम्|

**महारथाश्च भयादेव रणादुपरतं त्वां मंस्यन्ते येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम्|**

**तात्पर्यम्**— भगवाञ् श्रीकृष्णोऽर्जुनं स्वं निर्णयं भाष्यमाण आस्ते| दुर्योधनकर्णादिमहासेनापतयो मां भ्रातृपितामहादिकरुणावशेन युद्धक्षेत्रादुपरतं मंस्यन्त इति मा मन्यस्व| प्राणत्यागभयादेवोपरतं त्वाम् मंस्यन्ते| एवं त्वयि तेषां बहुमान्यत्वं नश्यतीति|

**अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः|**

**निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम्||३६||**

**अवाच्यवादान्**— परुषवचनम्; **च**— अपि; **बहून्**— अनेकान्; **वदिष्यन्ति**— कथयिष्यन्ति; **तव**— भवतः; **अहिताः**— शत्रवः; **निन्दन्तः**— अवजानन्तः; **तव**— भवतः; **सामर्थ्यम्**— दाक्ष्यम्; **ततः**— तस्मात्; **दुःखतरम्**— क्लेशतरम्; **नु**— खलु; **किम्**— किमिव|

**तवाहिताश्च बहूनवाच्यवादान् वदिष्यन्ति ततस्ते तव सामर्थ्यं निन्दन्तः किं नु दुःखतरम्?**

**तात्पर्यम्**— आदौ भगवाञ् श्रीकृष्णोऽर्जुनानुचितकरुणया विस्मितो भूत्वा तदनार्यजुष्टमुवाच| अत्र नानाशब्दैस्तन्मिथ्याकरुणाविरुद्धां स्वोक्तिं प्रमाणीचकार|

**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्|**

**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः||३७||**

**हतः**— व्यापादितः; **वा**— अथवा; **प्राप्स्यसि**— लप्स्यसे; **स्वर्गम्**— सुरलोकम्; **जित्वा**— जयं प्राप्य; **वा**— यद्वा; **भोक्ष्यसे**— अनुभविष्यसि; **महीम्**— पृथिवीम्; **तस्मात्**— ततः; **उत्तिष्ठ**— सज्जीभव; **कौन्तेय**— हे कुन्तीपुत्र; **युद्धाय**— रणाय; **कृत+निश्चयः**— कृतो निर्णयो येन सः|

**हे कौन्तेय! हतो वा स्वर्गं प्राप्स्यसि जित्वा वा महीं भोक्ष्यसे| तस्मात् कृतनिश्चयो भूत्वा युद्धायोत्तिष्ठ|**

**तात्पर्यम्**— यद्यप्यर्जुनपक्षजयो निश्चितो नासीत्तथैव तेन योद्धव्यमेव यतस्तत्र हतो भूत्वापि स्वर्गमधिगच्छेत्|

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ|**

**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि||३८||**

**सुख+दुःखे**— हर्षक्लेशौ; **समे**— समाने; **कृत्वा**— अनुष्ठाय; **लाभ+अलाभौ**— प्राप्तिहानी; **जयअजयौ**— विजयपराजयौ; **ततः**— तत्पश्चात्; **युद्धाय**— रणाय; **युज्यस्व**— युक्तो भव; **न**— न कदाचन; **एवम्**— इत्थम्; **पापम्**— पातकम्; **अवाप्स्यसि**— लप्स्यसे|

**जयाजयौ लाभालाभौ सुखदुःखे च समे कृत्वा युद्धाय युज्यस्व| एवं ततः पापं नावाप्स्यसि|**

**तात्पर्यम्**— अत्र युद्धाय युध्यस्व यत इयं मदिच्छेति भगवाञ् श्रीकृष्णः प्रत्यक्षं वदति| कृष्णभावनामृतकार्येषु सुखदुःखे लाभालाभौ जयाजयौ न गन्यन्ते| श्रीकृष्णार्थमेव सर्वं करणीयमिति दिव्यचेतना| एवम्भूते तत्र कर्मफलं नैव| रजोगुणे सत्त्वगुणे वा स्वेन्द्रियतृप्तिकृते कर्म कुर्वतः शुभाशुभफलाधीनत्वं वर्तते| किन्तु कृष्णभावनामृतकार्येषु सर्वथाश्रितो यो लौक्यवत्तस्य किञ्चनर्णत्वं नैव| यथोक्तम् (श्री. भा. ११.५.४१)—

देवर्षिभूताप्तनृणां पितृणां न किङ्करो नायमृणी च राजन्|

सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्तम्|| इति|

अत्रैषोऽसाक्षात् सङ्केतोऽर्जुनाय दत्तोऽग्रे चैतदधिकं स्फुटं व्याख्यायिष्यते|

**एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु|**

**बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि||३९||**

**एषा**— इयम्; **ते**— तुभ्यम्; **अभिहिता**— वर्णिता; **सांख्ये**— वैश्लेषिकानिसन्धाने; **बुद्धिः**— प्रज्ञा; **योगे**— निष्कामकर्मणि; **तु**— किन्तु; **इमाम्**— एताम्; **शृणु**— आकर्णय; **बुद्ध्या** — प्रज्ञया; **युक्तः**— सहितः; **यया**— येन; **पार्थ** — हे पृथापुत्र; **कर्मबन्धम्**— कर्मफलबन्धनम्; **प्रहास्यसि**— त्यक्ष्यसि|

**हे पार्थ! एषा बुद्धिः सांख्ये तेऽभिहिता योगे त्विमां शृणु यया बुद्ध्या युक्तः कर्मबन्धं प्रहास्यसि|**

**तात्पर्यम्**— सम्यक् ख्यायते प्रकाश्यते वस्तुतत्त्वमनयेति संख्या सम्यग् ज्ञानं तस्मिन् प्रकाशमानमात्मतत्त्वं सांख्यमिति निरुक्तेः| योगस्त्विन्द्रियसंयमः| अर्जुनस्य युद्धत्यागनिश्चय इन्द्रियतृप्तिमूलक एव| स्वजनमहत्वा

धार्तराष्ट्रपराजयराज्यभोगापेक्षया सुखतरमाप्स्यामीति मत्वा स्वप्रधानकर्तव्यं विस्मृत्यार्जुनो युद्धं त्यक्तुमैच्छत्| उभयत्र मूलसिद्धान्त इन्द्रियतृप्तिरेव| तज्जयोत्पन्नसुखं जीवितस्वजनसङ्गोत्पन्नसुखं चोभे स्वेन्द्रियतृप्तिमूलके यत्र बुद्धित्यागो धर्मत्यागोऽपि स्याताम्| तस्मात् पितामहदेहवधेनात्मवधो नैवेति व्याख्यातं श्रीकृष्णेन| अहं स्वयं सर्वे जीवाश्च नित्यदा पृथग्व्यक्तय एव भूतवर्तमानभविष्यकालेषु यतस्तत्तन्नित्यपृथग्व्यक्तित्वं तत्तत्स्वभाव एवेति च व्याख्यातं तेन| नानाप्रकारैरस्माकं वस्त्रवद्देहपरिवर्तनमेव भवति किन्तु तत्त्वतो देहमुक्तेरनन्तरमपि व्यक्तित्वमवतिष्ठते| देहात्मनोर्वैश्लेषिकानुसन्धानं सुस्पष्टं व्याख्यातं श्रीकृष्णेन| अत्रेदं देहात्मवैश्लेषिकज्ञानं सांख्यमिति प्रोक्तं निरुक्तेः| इदं सांख्यं तु नास्तिककपिलसांख्यदर्शनासम्बद्धमेव| मिथ्याकपिलसांख्यदर्शनाच्चिरं पूर्वं श्रीमद्भागवतप्रस्तुतं श्रीकृष्णावतारेण यथार्थेन कपिलदेवेन मात्रे देवहूत्यै व्याख्यातमिदम्| सक्रियः परमपुरुषः प्रकृतौ दृष्टिपातेन सृजतीति तेन स्फुटं व्याख्यातम्| इदं वेदेषु गीतायां चाभिमतम्| परमेश्वरः प्रकृतौ दृष्टिं क्षिप्त्वा सूक्ष्मात्मनः प्रावेशयदिति वेदोक्तम्| मायावशेनेन्द्रियतृप्तिकृते कर्म कुर्वतस्ते सर्वे व्यक्तयः स्वयं भोक्तृमानिनः| इयं मनोवृत्तिर्मुक्तिप्रायं यावदवतिष्ठते यदा जीवात्मा भगवदैक्यं वाञ्छति| अयमिन्द्रियतृप्तिमोहरूपेण मायान्तिमपाश एव ततस्तादृशेन्द्रियतृप्तिकर्ममग्नबहुजन्मनामन्ते महात्मा वासुदेवं श्रीकृष्णं शरणं गच्छति येन परमसत्यान्वेषणं सिद्धम्|

शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नमिति शरणागत्यार्जुनो गुरुरूपेण श्रीकृष्णं स्वीचकार| फलतः श्रीकृष्णः सम्प्रति कर्मयोगस्य बुद्धियोगस्य वा पद्धतिं वक्ष्यति| केवलं भगवदिन्द्रियतृप्तिकृते भक्तिमयसेवापद्धतिं वक्ष्यतीति यावत्| अयं बुद्धियोगो हृत्स्थपरमात्मना साक्षात्सङ्गम एव| यथा दशमाध्याये स्पष्टं व्याख्यायिष्यते ददामि बुद्धियोगं तमिति| तादृशसङ्गमस्तु भक्तिमयसेवां विना नैव घटते| तस्माद्दिव्यप्रेममयसेवायां भगवद्भक्तौ कृष्णभावनामृते स्थितो यः स भगवद्विशिष्टानुग्रहेण बुद्धियोगावस्थामाप्नोति| दिव्यप्रेम्णा सदैव भक्तिमयसेवाप्रवृत्ता ये तेभ्य एव प्रेमभक्तिशुद्धज्ञानं ददामीति भगवतोक्तम्| अनेन प्रकारेण भक्तो नित्यानन्दमयधाम्नि भगवन्तं सुखेन समधिगच्छति|

एवमत्रोक्तो बुद्धियोगो भगवद्भक्तियोग एव सांख्यशब्दस्तु मिथ्याकपिलोक्तनास्तिकसांख्ययोगासम्बद्धो हि| अतोऽत्रोक्तः सांख्ययोगो नास्तिकसांख्यसम्बद्ध इति भ्रमो मास्तु| न च तदानीं तस्य दर्शनस्य प्रभाव आसीत्| न च श्रीकृष्णस्तादृशमीश्वरविहीनकाल्पनिकदर्शनं वदेत् खलु| यथार्थं सांख्यदर्शनं श्रीकपिलदेवेन श्रीमद्भागवते व्याख्यातम्| किन्तु तदप्यत्रासम्बद्धम्| अत्र देहात्मवैश्लेषिकव्याख्यानमिति सांख्यम्| भगवाञ् श्रीकृष्ण आत्मवैश्लेषिकव्याख्यानं चकार येनैवार्जुनो बुद्धियोगपदमथवा भक्तियोगपदं यावदधिगच्छेत्| ततः श्रीकृष्णसांख्यदर्शनं कपिलदेवसांख्यदर्शनं चैकमेव| ते द्वे भक्तियोगो हि| अतः सांख्ययोगौ पृथग् बालाः प्रवदन्ति न पण्डिता इति श्रीकृष्णेनोक्तम्| असंशयं नास्तिकसांख्ययोगो भक्तियोगासम्बद्ध एव| तथापि तद् भगवद्गीतायां नास्तिकसांख्ययोग उक्त इति बुद्धिहीनानां घोषणम्|

अतो भक्तियोगस्य पूर्णानन्दे पूर्णज्ञाने च कृष्णभावनामृतेन कार्यमिति बुद्धियोग इति बोध्यम्| भगवत्तृप्त्य एव कर्म करोति यः सर्वं कष्टमनादृत्य स बुद्धियोगयुक्तकर्मकर्ता सदैव दिव्यानन्दभोक्ता| तद्दिव्यकार्यद्वारा भगवदनुग्रहेण स्वतः सर्वदिव्यज्ञानं प्राप्यते तदेवं ज्ञानप्राप्तिहेत्वतिरिक्तयत्नं विनापि मुक्तिः साध्यते| कुटुम्बकृतेऽथवा लौकिकसुखकृते सकामकर्मतः कृष्णभावनाभावितकार्यस्य महान् भेदो वर्तते| तस्मादस्मत्कार्यदिव्यगुणो बुद्धियोगो हि|

**नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते|**

**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्||४०||**

**न**— न खलु; **इह**— अस्मिन् योगे; **अभिक्रम+नाशः**— प्रयासे हानिः; **अस्ति**— वर्तते; **प्रत्यवायः**— क्षयः; **न**— न कदाचन; **विद्यते**— वर्तते; **सु+अल्पमपि**— मनागपि; **अस्य**— एतस्य; **धर्मस्य**— कर्तव्यस्य; **त्रायते**— मोचयति; **महतः**— बृहतः; **भयात्**— भीतेः|

**इहाभिक्रमनाशो नास्ति प्रत्यवायश्च न विद्यते| अस्य धर्मस्य स्वल्पमपि महतो भयात्त्रायते|**

**तात्पर्यम्**— इन्द्रियतृप्त्यपेक्षामृते कृष्णभावनामृते कार्यमर्थात् कृष्णहिताय कार्यमुत्तमदिव्यकार्यविशेषः| एतस्य कार्यस्य लघुप्रारम्भेऽपि विघ्नो न भवति न च कस्याञ्चिदवास्थायां स लघुप्रारम्भो नश्येत्| लौकिकावस्थायां प्रारब्धकार्यं पूरणीयमन्यथा समस्तप्रयासो निष्फलः| कृष्णभावनामृते त्वपूर्णस्य कार्यस्यापि स्थायिप्रभाव उत्पद्यते| अतो कृष्णभावनामृतकृतकार्येऽपूर्णेऽपि तत्कर्तुर्हानिर्नैव| कृष्णभावनामृत एकोत्तरं कृतं कार्यं स्थायिपरिणामान्नयति येनागामिप्रारम्भो द्व्युत्तरपदाद् भवेत्| लौकिककार्ये तु शतोत्तरं साफल्यं विना लाभो न हि| अजामिलः कृष्णभावनामृते स्वकर्तव्यं मनाक् चकार परन्तु भगवदनुग्रहेणान्ते शतोत्तरं फलं प्राप| अस्मिन् प्रसङ्गेऽसौ सुपद्यं दृश्यते श्रीमद्भागवते (१.५.१७)—

त्यक्त्वा स्वधर्मं चरणाम्बुजं हरेर्भजन्नपक्वोऽथ पतेत्ततो यदि|

यत्र क्व वाभद्रमभूदमुष्य किं को वार्थ आप्तोऽभजतां स्वधर्मतः|| इति|

यथा क्रीष्टीयैरुच्यते— यदि सकलं विश्वं प्राप्यते परन्तु शाश्वतात्मा भ्रश्यते तर्हि को लाभः स्यादिति|

लौकिकक्रियास्तत्फलानि च शरीरेण सह नश्यन्ति| कृष्णभावनामृतकृतकार्यं तु देहनाशात् पश्चादपि पुनः कृष्णभावनामृतं प्रति नयति| सुसंस्कृतब्राह्मणकुले वा धनिकुलीनकुले वामुत्र मानुषरूपेण जन्मावसरस्तावन्निश्चितो येनोत्कर्षाय पुनरवसरः स्यात्| अयं कृष्णभावनामृतसम्पन्नकार्यस्यानुपमो गुणः|

**व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन|**

**बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्||४१||**

**व्यवसाय+आत्मिका**— कृष्णभावनामृते
स्थिरा; **बुद्धिः**— मतिः; **एका**— एकमात्रा; **इह**— अस्मिंल्लोके; **कुरु+नन्दन**— हे
कुरुपुत्र; **बहु+शाखाः**— अनेकाङ्गैर्युक्ताः; **हि**— अवश्यम्; **अनन्ताः**— असंख्याः; **च**— अपि; **बुद्धयः**— मतयः; **अ व्यवसायिनाम्**— अकृष्णभावनाभावितानाम्|

**हे कुरुनन्दन! इह व्यवसायात्मिका बुद्धिरेका| अव्यवसायिनां च बुद्धयो बहुशाखा हि|**

**तात्पर्यम्**— कृष्णभावनामृतं जन्मोत्तमसिद्धये कल्पत इति दृढविश्वासो व्यवसायात्मिका बुद्धिरुच्यते| चैतन्यचरितामृते (मध्ये २२.६२) तथोक्तम्—

श्रद्धाशब्दे विश्वास कहे सुदृढ निश्चय|

कृष्णे भक्ति कैले सर्वकर्म कृत हय|| इति|

अलौकिकवस्तुविशेषे दृढविश्वास इति श्रद्धा| कृष्णभावनामृतकार्यप्रवृत्तस्य संसारसम्बन्धे कुलसम्प्रदायमानवताराष्ट्रादिकर्तव्यानि नैव| सकामकर्म गतशुभाशुभकर्मफलप्रयोग एव| कृष्णभावनामृतप्रबुद्धस्य शुभफलप्रयासावश्यकता कर्मसु नैव| कृष्णभावनामृतस्थस्य सर्वकर्माणि ब्रह्मपदस्थ् आ न्येव तस्य शुभाशुभादिद्वन्द्ववश्यताहीनत्वात्| कृष्णभावनामृतोत्तमसिद्धिर्देहात्मबुद्धित्यागो हि| आनुक्रमिककृष्णभावनामृतेनेयमवस्था स्वतः प्राप्यते|

कृष्णभावनाभावितव्यवसायात्मिकबुद्धिर्ज्ञानमूलका| वासुदेवः सर्वमिति स महात्मा सुदुर्लभ इत्युक्तम्| वासुदेवः कृष्णः सर्वकारणकारणमिति सर्वथा वेत्ति यः स दुर्लभो महात्मा कृष्णभावनाभावित एव| यथैव वृक्षमूलसेचनेन पत्रेभ्यः शाखाभ्यश्च जलं स्वतो दीयते तथैव कृष्णभावनामृतकार्यैरात्मकुलसमाजराष्ट्रमानवतादिभ्य उत्तमसेवा विधातुं शक्यते| कस्यचित् कार्यैः श्रीकृष्णे सन्तुष्टे सति सर्वे तोक्ष्यन्ति| कृष्णभावनामृतसेवा तु श्रीकृष्णसत्प्रतिनिधेः शिष्यस्वभावज्ञस्य कृष्णभावनामृतकार्यार्थनिर्देशसमर्थस्य गुरोरुचितोपदेशेन सम्यक् क्रियते| एवं सति कृष्णभावनामृतदाक्ष्यप्राप्तये दृढतया कार्यं करणीयं श्रीकृष्णप्रतिनिधिनिर्देशः पालनीयः सद्गुरूपदेशो जन्मलक्ष्यमेवेति स्वीकरणीयश्च| प्रसिद्धे श्रीगुर्वष्टके श्रीलविश्वनाथचक्रवर्तिपादैः अस्मभ्यमेवमुपदिश्यते—

यस्य प्रसादाद् भगवत्प्रसादो यस्याप्रसादान्न गतिः कुतोऽपि|

ध्यायन् स्तुवंस्तस्य यशस्त्रिसन्ध्यं वन्दे गुरोः श्रीचरणारविन्दम्|| इति|

समस्तपद्धतिस्तु देहात्मबुद्ध्यतीतात्मपूर्णज्ञानाधीना न सैद्धान्तिकरूपेणापि तु व्यावहारिकरूपेण यत्र सकामकर्मजन्येन्द्रियतृप्त्यवसरो नैव| अस्थिरमनो यस्य स विविधसकामकर्मभिराकृष्टो भवति|

**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः|**

**वेदवादरताः पार्थ नान्यदस्तीति वादिनः||४२||**

**कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम्|**

**क्रियाविशेषबहु ला ं भोगैश्वर्यगतिं प्रति||४३||**

**यामिमाम्**— यामेताम्; **पुष्पिताम्**— कुसुमिताम्; **वाचम्**— वचनम्; **प्रवदन्ति**— भाषन्ते; **अविपश्चितः**— अल्प ज्ञाः; **वेद+वाद+रताः**— वेदानुगमानिनः; **पार्थ**— हे पृथापुत्र; **न**— न कदाचन; **अन्यत्**— कि ञ्चि दधिकम्; **अस्ति**— वर्तते; **इति**— एवम्; **वादिनः**— वक्तारः; **काम+आत्मानः**— इ न्द्रियतृप्तिवाञ्छनः; **स्वर्गपराः**— परमः पुरुषार्थः स्वर्ग एव येषां ते; **जन्म+कर्म+फल+प्रदाम्**— उत्तमजन्मादिरूपं सकामकर्मफलं प्रददाति या ताम्; **क्रिया+विशेष+बहुलाम्**— नानाविशिष्टविधयो यस्यास्ताम्; **भोग+ऐश्वर्य+गतिम्**— इन्द्रियतृप्तिविभवयोः प्राप्तिम्; **प्रति**— उद्दिश्य|

**हे पार्थ! नान्यदस्तीति वादिनो वेदवादरता अविपश्चितो यामिमां पुष्पितां वाचं प्रवदन्ति तां जन्मकर्मफलप्रदां क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति कामात्मानः स्वगपरा भवन्ति|**

**तात्पर्यम्**— प्रायो जना अतिबुद्धिमन्तो नैवाज्ञानेन च वेदकर्मकाण्डप्रस्तुतसकामकर्मस्वतीवासक्ताः| ते स्वर्गे भोगार्थप्रस्तावातिरिक्तं किमप्यन्यन्नेच्छन्ति यत्र स्त्र्यो मद्यं चोपलभ्यन्ते लौकिकैश्वर्यं चातिसामान्यम्| स्वर्गाप्तये वेदेषु बहवो यज्ञाः प्रस्तूयन्ते विशेषतो ज्योतिष्टोमः| तत्त्वतः स्वर्गकामो यजेतेत्युक्तं तत इदमेव समस्तवैदिकप्रज्ञालक्ष्यमित्यल्पज्ञानां मतम्| तेषामज्ञानां कृष्णभावनामृते दृढकार्यस्थितत्वमतिकष्टेन भवेत्| यथा तदाकर्षफलाज्ञा विषवृक्षपुष्पासक्ता मूर्खास्तथा स्वर्गैश्वर्यजन्येन्द्रियतृप्याकृष्टा अबुद्धाः|

"अपाम सोमममृता अभूम", "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इति वेदकर्मकाण्डवचनम्| चातुर्मास्यतपो तप्त्वा याजी सोमरसं पातुं योग्यो भवति येनामृतत्वं नित्यानन्दश्चेति यावत्| पृथिव्यामपि केचनेन्द्रियतृप्तिभोगार्थं बलवत्तायै सोमरसात्युत्सुकाः| ते भवबन्धनमोक्षाविश्वासा वेदयज्ञैश्वर्ययुक्तक्रियात्यासक्ताः| प्रायस्ते विषयिनः स्वर्गभोगव्यतिरिक्तं च किमप्यन्यन्नेच्छन्ति| नन्दनकानननामके स्वर्गोद्याने सुन्दराप्सराणां सङ्गस्य स्ववसरः सोमरसप्राचुर्यं चोपलभ्येत इति प्रसिद्धम्| तादृशं दैहिकसुखं निश्चयेन विषयि| तस्मात् संसारस्वामिमानिनः केवलं तादृशलौकिकास्थयिसुखासक्ताः|

**भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम्|**

**व्यवसायात्मिका बुद्धिः समाधौ न विधीयते||४४||**

**भोग+ऐश्वर्य+प्रसक्तानाम्**— लौकिकानन्दविभवानुरक्तानाम्; **तया**— तया वाचा; **अपहृत+चेतसाम्**— विमोहितं मनो येषां ते; **व्यवसाय+आत्मिका**— दृढनिश्चया; **बुद्धिः**— भगवद्भक्तिः; **समाधौ**— स्थिरमनसि; **न**— न कदाचित्; **विधीयते**— घटते|

**तया वाचापहृतचेतसां भोगैश्वर्यप्रसक्तानां भगवद्भक्तिव्यवसायात्मिकबुद्धिः समाधौ न विधीयते|**

**तात्पर्यम्**— समाधिः स्थिरमनः| सम्यगाधीयतेऽस्मिन्नात्मतत्त्वयाथात्म्यमिति निरुक्तेः| इन्द्रियतृप्त्यनुरक्तानां क्षणिकवस्तुविमोहितानां समाधिर्जात्वसम्भवः| प्रायस्ते मायागत्या दण्डिताः|

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन|**

**निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान्||४५||**

**त्रैगुण्य+विषयाः**— प्रकृतित्रिगुणात्मकाः; **वेदाः**— श्रुतिः; **निस्त्रैगुण्यः**— त्रिगुणातीतः; **भव**— वर्तस्व; **अर्जुन**— हे
अर्जुन; **निर्द्वन्द्वः**— द्वन्द्वरहितः; **नित्यसत्त्वथः**— शाश्वतशुद्धाध्यात्मस्थितः; **निर्योगक्षेमः**— लाभरक्षयोश्चिन्ताहीनः; **आत्मवान्**— आत्मस्थः|

**वेदास्त्रैगुण्यविषयाः| हे अर्जुन! निस्त्रैगुण्यो निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् भव|**

**तात्पर्यम्**— सर्वलौकिककर्मसु त्रिगुणेषु क्रियाप्रतिक्रिया वर्तन्ते| ताः संसारबन्धनहेतवे सकामकर्मफलाय कल्पन्ते| प्रायो वेदाः सकामकर्मविषया येन जना इन्द्रियतृप्तिविषयात् क्रमशो ब्रह्मपदं यावदुन्नता भवेयुः| वेदान्तदर्शनब्रह्मपदं यावदुन्नतो भव यत्रादौ ब्रह्मजिज्ञासेति श्रीकृष्णस्य मित्ररूपेण शिष्यरूपेण चायार्जुनायोपदिष्टम्| संसारे सर्वे जीवा महताकष्टेन जीवितार्थं श्राम्यन्ति| तेषां कृते परमेश्वरो जगत् सृष्ट्वा जीवनप्रकारे संसारमोक्षे चोपदेशान् वेदान् ददौ| कर्मकाण्डप्रतिपादितसकामकर्मरूपाया इन्द्रियतृप्तेः समाप्तौ सत्यां ब्रह्मसाक्षात्कारावसरोऽस्त्युपनिषद्द्वारा| ता उपनिषदो वेदभागा यथैव भगवद्गीता महाभारतनामकस्य पञ्चमवेदस्य भागः| उपनिषदः पारमार्थिअजीवनप्रारम्भं सूचयन्ति|

यावद्देहस्तिष्ठति तावत्त्रिगुणक्रियाप्रतिक्रियाः| सुखदुःखशीतोष्णादिद्विन्द्वानां सम्मुखे सहिष्णुता शिक्षणीया| तत्सहनेन लाभहान्युत्पन्नोत्कण्ठोद्धारः प्राप्यते| श्रीकृष्णेच्छायाः सर्वथाधीने सत्यसौ ब्रह्मपदं पूर्णकृष्णभावनामृतेऽधिगम्यते|

**यावानर्थ उदपाने सर्वतः सम्प्लुतोदके|**

**तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः||४६||**

**यावान्**— यथा; **अर्थः**— प्रयोजनम्; **उदपाने**— कूपे; **सर्वतः**— सर्वथा; **सम्प्लुत+उदके**— विशालजलाशये; **ता वत्**— तथा; **सर्वेषु**— समस्तेषु; **वेदेषु**— श्रुतिषु; **ब्राह्मणस्य**— परब्रह्मज्ञस्य; **विजानतः**— विदतः|

**यावानर्थ उदपाने साध्यते तावान् सम्प्लुतोदके सर्वतः साध्यते| तथैव यावानर्थः सर्वेषु वेदेषु साध्यते तावान् विजानतो ब्राह्मणस्य साध्यते|**

**तात्पर्यम्**— वेदकर्मकाण्डप्रतिपादितक्रियायज्ञा आत्मसाक्षात्कारक्रमकविकासप्रोत्साहनाय कल्पन्ते| वेदाध्ययप्रयोजनमादिकारणकारणस्य श्रीकृष्णस्य ज्ञानमिति भगवद्गीतायां पञ्चदशाध्याये (१५.१५) स्पष्टमुक्तम्—

वेदैश्च सर्वैरहमेव वेद्य इति| एवं श्रीकृष्णस्य तेन सह स्वनित्यसम्बन्धश्च ज्ञानमित्यात्मसाक्षात्कारः| जीवानां श्रीकृष्णांशत्वात् कृष्णभावनामृतस्य पुनरुत्थानं वेदज्ञानोत्तमावस्था| श्रीमद्भागवते (३.३३.७) दृढीकृतमेतत्—

अहो बत श्वपचोऽतो गरीयान् यज्जिह्वाग्रे वर्तते नाम तुभ्यम्|

तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम गृणन्ति ये ते|| इति|

एवं यज्ञक्रियास्वेवासक्तिं विना स्वर्गश्रेष्ठेन्द्रियतृप्तिकामनां विना च वेदप्रयोजनबोधार्थं जनः सुबुद्धिमान् भवेत्| अस्मिन् युगे जनैर्वेदक्रियासर्वविधिविधानपालनमशक्यम्| समस्तवेदान्तोपनिषदां सर्वथाध्ययनं चाशक्यम्| वेदप्रयोजनसाधनार्थं बहुशः समयः शक्तिर्ज्ञानमुपायाश्चापेक्ष्यन्ते| अस्मिन् युग इदं दुःसाध्यमेव| किन्तु वैदिकसंस्कृतिप्रयोजनं भगवच्छुद्धनामकीर्तनेन साध्यते यथा पतितजीवतारकेन भगवता श्रीचैतन्येनोपदिष्टम्| वेदान्ताध्ययनस्थाने किमर्थं भवान् भावुकवद् भगवच्छुद्धनाम कीर्तयतीति पृष्टः श्रीचैतन्यो वेद उत्कृष्टेण पण्डितेन प्रकाशानन्दसरस्वतीनामकेनोवाच— मम गुरुर्मां महामूर्खं मत्वा श्रीकृष्णनामकीर्तनमाज्ञापयदिति| एवं कृत्वा स उन्मत्त इव भावोन्मत्तो बभूव| अस्मिन् युगे प्रायो जना मूर्खा वेदान्तबोधार्थमपर्याप्तशिक्षिताश्च| वेदान्तोत्तमप्रयोजनं भगवच्छुद्धनामकीर्तनेनापराधहीनेन साध्यते| वेदान्तो वेदप्रज्ञायाः परा काष्ठा तत्कारस्तज्ज्ञश्च श्रीकृष्णः| भगवच्छुद्धनामकीर्तनानन्दी तु परमवेदान्ती| इदं समस्तवैदिकरहस्यस्य चरमलक्ष्यम्|

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन|**

**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि||४७||**

**कर्मणि**— विहितकर्तव्ये; **एव**— हि; **अधिकारः**— स्वत्वम्; **ते**— तव; **मा**— न कदाचन; **फलेषु**— परिणामेषु; **कदाचन**— कदाचित्; **मा**— न कदाचित्; **कर्म+फल+हेतुः**— कार्यपरिणामकारणम्; **भूः**— भव; **मा**— न कदाचन; **ते**— तव; **सङ्गः**— आसक्तिः; **अस्तु**— भवेत्; **अकर्मणि**— विहितकर्तव्याकरणे|

**कर्मण्येव तवाधिकारः| न कदाचन फलेषु| कर्मफलहेतुर्मा भव| अकर्मणि तव सङ्गो मास्तु|**

**तात्पर्यम्**— अत्र विहितकर्म च स्वच्छन्दकर्म चाकर्म चेति त्रिविषयाः| प्रकृतिप्राप्तगुणानुसारेण स्थापितं कार्यं विहितकर्म| अधिकार्यनुमतिरहितं कार्यं स्वच्छन्दकर्म| कर्तव्याननुष्ठानमकर्म| निष्क्रियो मा भवापि तु फलासक्तिं विना स्वविहितकर्तव्यं कुर्विति भगवदुपदेशार्जुनाय| स्वकर्मफलासक्तो यः स कर्महेतुरपि| एवं स एव तादृशकर्मफलसुखदुःखभोक्ता|

विहितकर्माधिकृत्य नित्यकर्म नैमित्तिकर्म काम्यकर्म चेति तद्विभागत्रयम्| शास्त्रादेशानुगुणेन कर्तव्यतया फलेच्छारहितं नित्यकर्म सात्त्विकम्| फलेच्छायुक्तं कर्म बन्धनहेतुस्तस्मादशुभम्| सर्वेषां विहितकर्माधिकारः परन्तु फलासक्तिं विना कर्म करणीयम्| असंशयमसौ निष्कामकर्म मुक्तिमार्गं प्रति नयति|

ततः फलासक्तिं विना कर्तव्यतया युध्यस्वेत्यर्जुनाय भगवदुपदेशः| तस्य युद्धत्याग आसक्तेरन्यरूपं हि| एषासक्तिर्मुक्तिमार्गं प्रति न कदाचन नयति| स्वीकारात्मिका निषेधात्मिका वा काचनासक्तिर्बन्धनहेतुः| अकर्म पापम्| अतोऽर्जुनाय कर्तव्यकृते युद्धमेक एव मुक्तिशुभमार्गः|

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय|**

**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते||४८||**

**योग+स्थः**— योगे
स्थितः; **कुरु**— अनुतिष्ठस्व; **कर्माणि**— कर्तव्यानि; **सङ्गम्**— आसक्तिम्; **त्यक्त्वा**— हित्वा; **धनञ्जय**— हे अर्जुन; **सिद्धि+असिद्ध्योः**— साफल्ये वैफल्ये च; **समः**— समानदृक्; **भूत्वा**— वृत्त्वा; **समत्वम्**— साम्यम्; **योगः उच्यते**— योगोऽभिधीयते|

**हे धनञ्जय! सङ्गं त्यक्त्वा योगस्थः सिद्ध्यसिद्ध्योः समो भूत्वा कर्माणि कुरु| समत्वं योग उच्यते|**

**तात्पर्यम्**— योगस्थः कुरु कर्माणीति श्रीकृष्णेनोक्तमर्जुनं प्रति| स योगः कः? नित्यक्षोभणेन्द्रियसंयमेन परमेश्वरे मनस ऐकाग्र्यमिति योगः| परमेश्वरस्तु कः? श्रीभगवानेव परमेश्वरः| युध्यस्वेति स्वयं भगवदुक्त्यार्जुनस्य युद्धपरिणामसम्बन्धो नैव| जयलाभौ श्रीकृष्णस्यैव| मदादेशानुसारेण कर्म कुर्वित्येवार्जुनायोपदिष्टम्| श्रीकृष्णादेशपालनं यथार्थो योगः| स एव योगः कृष्णभावनामृतपद्धतावभ्यस्यते| कृष्णभावनामृतेनैव स्वामित्वं त्यक्तुं शक्यते| श्रीकृष्णदास्यमथवा श्रीकृष्णदासदास्यं ग्रहणीयम् [चै.च.मध्य. १८.८०]| कृष्णाभावनामृतकार्यानुष्ठानस्यायमुचितो विधिर्यत् स्वयं योगकार्यानुष्ठानसाहाय्यम्|

क्षत्रियभूतोऽर्जुनो वर्णाश्रमधर्मानुगः खलु| वर्णाश्रमाचारवता पुरुषेण परः पुमान्, विष्णुराराध्यते पन्था नान्यत्तत्तोषकारणमिति विष्णुपुराणोक्तिः (३.८.९)| लौकिकवत् कोऽपि स्वात्मानमेव न तोषयेदपि तु श्रीकृष्णम्| श्रीकृष्णमतोषयित्वा वर्णाश्रमधर्मयमनियमा यथार्थं पालयितुं न शक्यन्ते| अत्र श्रीकृष्णादेशानुगुणेन कर्मोपदिष्टमर्जुनाय|

**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय|**

**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः||४९||**

**दूरेण**— अतिदूरम्; **हि**— अवश्यम्; **अवरम्**— अपकृष्टम्; **कर्म**— कार्यम्; **बुद्धि+योगात्**— कृष्णभावनामृतबलात्; **धनञ्जय**— हे अर्जुन; **बुद्धौ**— तस्यां चेतनायाम्; **शरणम्**— आश्रयम्; **अन्विच्छ**— मृग्यस्व; **कृपणाः**— क्षुद्राः; **फलहेतवः**— कर्मफलकामिनः|

**हे धनञ्जय! बुद्धियोगात् कर्म दूरेणावरं हि| ततो बुद्धौ शरणमन्विच्छ| फलहेतवः कृपणाः |**

**तात्पर्यम्**— तत्त्वतो भगवन्नित्यदासभूतस्वरूपमवगच्छति यः स कृष्णभावनामृतव्यतिरिक्तसर्वकर्माणि त्यजति| यथा पूर्वमुक्तं भगवद्दिव्यप्रेममयसेवा बुद्धियोगः| एषा भक्तिमयसेवा जीवानां कार्यस्योचितमार्गः| कृपणा एव स्वकर्मफलभोगेच्छुका येन संसारबन्धनं वर्धते| कृष्णभावनामृतकार्यव्यतिरिक्तसर्वकर्माणि गर्हितान्येव संसारे कर्तृबन्धनहेतुत्वात्| अतः नरः कर्महेतुर्भवितुं कदाचन नैच्छेत्| सर्वं कृष्णभावनामृते श्रीकृष्णसन्तोषाय करणीयम्| सौभाग्यादथवा कष्टश्रमादर्जितधनस्य प्रयोगप्रकारं न जानन्ति कृपणाः| कृष्णभावनामृते कार्ये समस्तशक्तयः प्रयोजनीया येन जन्मसाफल्यम्| कृपणवन्मन्दभाग्या जना भगवत्सेवायां मानवशक्तिं न हि प्रयुञ्जते|

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते|**

**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम्||५०||**

**बुद्धि+युक्तः**— भक्तियोगप्रवृत्तः; **जहाति**— त्यजति; **इह**— अस्मिञ् जन्मनि; **उभे**— द्वे; **सुकृत+दुष्कृते**— शुभाशुभे; **तस्मात्**— ततः; **योगाय**— भक्तियोगकृते; **युज्यस्व**— युक्तो भव; **योगः**— कृष्णभावनामृतम्; **कर्मसु**— कार्येषु; **कौशलम्**— कला|

**इह बुद्धियुक्तो भूत्वोभे सुकृतदुष्कृते जहाति| तस्माद्योगाय युज्यस्व| योगः कर्मसु कौशलम्|**

**तात्पर्यम्**— अनादिकालाज्जीवात्मनां शुभाशुभकर्मफलानि सञ्चितानि| एवम्भूते ते निरन्तरं यथार्थस्वरूपानभिज्ञास्तिष्ठन्ति| अज्ञानं भगवद्गीतोपदेशेन दूरीकर्तुं शक्यते| श्रीकृष्णं सर्वथा शरणागतिर्यया जन्मनि जन्मनि कर्मफलक्रियाप्रतिक्रियाशृंखलान्मुक्तिर्भवतीति तदुपदेशः| तस्मात् कर्मफलपावनपद्धतौ कृष्णभावनामृते कार्यं कुर्वित्यर्जुनायोपदिष्टम्|

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः|**

**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम्||५१||**

**कर्म+जम्**— सकामकर्मोत्पन्नम्; **बुद्धि+युक्ताः**— भक्तियोगप्रवृत्ताः; **हि**— अवश्यम्; **फलम्**— परिणामम्; **त्यक्त्वा**— हित्वा; **मनीषिणः**— महर्षयो भक्ता वा; **जन्म+बन्ध+विनिर्मुक्ताः**— जननमृत्युबन्धनमुक्ताः; **पदम्**— स्थानम्; **गच्छन्ति**— प्राप्नुवन्ति; **अनामयम्**— क्लेशरहितम्|

**भक्तियोगयुक्ता हि मनीषिणः कर्मजं फलं त्यक्त्वा जन्मबन्धविनिर्मुक्ता भूत्वा तेऽनामयं पदं गच्छन्ति|**

**तात्पर्यम्**— मुक्ता जीवास्तत्रत्या यत्र संसारदुःखं नैव| यथोक्तं भागवते (१०.१४.५८)—

समाश्रिता ये पदपल्लवप्लवं

महत् पदं पुण्ययशो मुरारेः|

भवाम्बुधिर्वत्सपदं परं पदं

पदं पदं यद्विपदां न तेषाम्|| इति|

अस्मिन् दुःखदसंसारे पदे पदे सङ्कटानि भवन्तीत्यविद्यया न ज्ञायते| कर्मफलैः सुखिनो भविष्याम इति मत्वाल्पज्ञा अविद्यया सकामकर्मभिः स्थितिं समीकर्तुं प्रयतन्ते| ब्रह्माण्डे कुत्रचित् किञ्चन दुःखहीनं प्राणमयं शरीरं नास्तीति ते न विदन्ति| संसारे कुत्रचिज्जन्ममृत्युजराव्याधिरूपदुःखं विद्यते| किन्तु भगवन्नित्यदासरूपेण यथार्थं स्वरूपमवगच्छति यः स एवं श्रीभगवत्तत्त्वमवगत्य भगवत्प्रेमभक्तिमयसेवाप्रवृत्तो भवेत्| फलतः स वैकुण्ठलोके प्रवेष्टुं योग्यो भवति यत्र संसारदुःखं मृत्युकालयोः प्रभावश्च न विद्येते| आत्मस्वरूपबोधे भगवदलौकिकस्थितिबोधोऽपि| जीवपदं भगवत्पदं चैकमेवेति मिथ्या मन्यते यः स तमःस्थो मन्तव्यस्तस्माद् भगवद्भक्तिमयसेवाप्रवृत्त्यसमर्थः| स स्वयं प्रभुर्भूत्वैवं जन्ममरणावृत्तिमार्गं रचयति| परन्तु दासरूपेण स्वरूपं बुद्धा भगवत्सेवायुक्तो यः स सद्यो वैकुण्ठलोके प्रवेष्टुं योग्यः| भगवत्कृते सेवा कर्मयोगो वा बुद्धियोगो वाभिधीयते| भक्तियोग इति यावत्|

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति|**

**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च||५२||**

**यदा**— यस्मिन् काले; **ते**— तव; **मोह+कलिलम्**— भ्रमरूपं गहनम्; **बुद्धिः**— भक्तियुक्तमतिः; **व्यतितरिष्यति**— परं गमिष्यति; **तदा**— तस्मिन् काले; **गन्ता असि**— गमिष्यसि; **निर्वेदम्**— विरक्तिम्; **श्रोतव्यस्य**— श्रोतुं योग्यं प्रति; **श्रुतस्य**— श्रुतं प्रति; **च**— अपि|

**यदा तव बुद्धिर्मोहकलिलं व्यतितरिष्यति तदा त्वं श्रोतव्यस्य श्रुतस्य च निर्वेदं गमिष्यसि|**

**तात्पर्यम्**— भगवद्भक्तिमयसेवामात्रेण वेदक्रियाविरक्तभूताणां महाभागवतानां जीवनेषु नानाशुभोदाहरणानि दृश्यन्ते| श्रीकृष्णं तेन सह स्वसम्बन्धं च तत्त्वतोऽवगत्य दक्षब्राह्मणोऽपि सकामक्रियाविरक्तो भवति| वैष्णवेषु महाभागवत आचार्यः श्रीमाधवेन्द्रपुर्येवमाह—

सन्ध्यावन्दन भद्रमस्तु भवतो भोः स्नान तुभ्यं नमो

भो देवाः पितरश्च तर्पणविधौ नाहं क्षमः क्षम्यताम्|

यत्र क्वापि निषद्य यादवकुलोत्तंसस्य कंसद्विषः

स्मारं स्मारमघं हरामि तदलं मन्ये किमन्येन मे|| इति (पद्यावली ७९)|

प्रातःस्नानत्रिसन्ध्याप्रार्थनापितृतर्पणादिवैदिकक्रियानुष्ठानानि नवशिष्याणामनिवार्याणि| किन्तु सर्वथा कृष्णभावनामृते तद्दिव्यप्रेममयसेवाप्रवृत्तस्तेषु सर्वेषु विधिविधानेषु विरक्तो भवति पूर्वमेव सिद्धिप्राप्तत्वात्| यदि कोऽपि परमेश्वरस्य श्रीकृष्णस्य सेवया ज्ञानपदमधिगन्तुमर्होऽतः परं शास्त्रप्रतिपादितनानातपोयज्ञानुष्ठानं तस्य न कर्तव्यम्| तथैव वेदलक्ष्यं श्रीकृष्णज्ञानप्राप्तिरेवेत्यज्ञात्वा केवलं क्रियानुष्ठानप्रवृत्तो यः स तासु क्रियासु केवलं कालहरणं वृथा कुरुते| कृष्णभावनाभाविता वेदोपनिषद्विषयरूपशब्दब्रह्मसीमामतिक्रामन्ति|

**श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला|**

**समाधावचला बुद्धिस्तदा योगमवाप्स्यसि||५३||**

**श्रुति+विप्रतिपन्ना**— वेदैर्विक्षिप्ता; **ते**— तव; **यदा**— यस्मिन् काले; **स्थास्यति**— स्थितं भविष्यति; **निश्चला**— स्थिरा; **समाधौ**— दिव्यचेतनायां कृष्णभावनामृते; **अचला**— दृढा; **बुद्धिः**— मतिः; **तदा**— तस्मिन् काले; **योगम्**— आत्मसाक्षात्कारम्; **अवाप्स्यसि**— लप्स्यसे|

**यदा तव श्रुतिविप्रतिपन्ना बुद्धिः समाधावचला निश्चला स्थास्यति तदा योगमवाप्स्यसि|**

**तात्पर्यम्**— समाधिस्थो यः स सर्वथा कृष्णभावनामृतभावितः| सम्पूर्णं समाधिस्थो यः स ब्रह्म परमात्मानं भगवन्तं च साक्षीकृतवानिति यावत्| नित्यकृष्णदासरूपं स्वरूपमित्येकमेव कर्तव्यं कृष्णभावनामृते कार्यानुष्ठानमिति च बोध आत्मसाक्षात्कारस्योत्तमसिद्धिः| कृष्णभावनाभावितो भगवत्स्थिरभक्तो वेदपुष्पितशब्दैर्विक्षिप्तो नैव भवेन्न च स्वर्गलोकप्राप्तये सकामकर्मप्रवृत्तः| कृष्णभावनामृते प्रत्यक्षं श्रीकृष्णसङ्गतिर्घटते तथा श्रीकृष्णात् सर्वादेशास्तस्यां दिव्यावस्थायामवगन्तुं शक्यन्ते| तैः कार्यैरवश्यं परिणामरूपेण निश्चयात्मकज्ञानं लभ्यते| केवलं श्रीकृष्णस्य तत्प्रतिनिधिरूपगुरोर्वाज्ञाः पालनीयाः|

**अर्जुन उवाच**

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव|**

**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम्||५४||**

**अर्जुनः उवाच**— अर्जुन उक्तवान्; **स्थित+प्रज्ञस्य**— कृष्णभावनामृतस्थस्य; **का**— कीदृशी; **भाषा**— वाणी; **समाधिस्थस्य**— समाधिस्थितस्य; **केशव**— हे कृष्णः; **स्थित+धीः**— कृष्णभावनामृते स्थिरबुद्धिः; **किम्**— कथम्; **प्रभाषेत**— वदति; **किम्**— कथम्; **आसीत**— आस्ते; **व्रजेत**— चरति; **किम्**— कथम्|

**अर्जुन उवाच— हे केशव! स्थितप्रज्ञस्य समाधिस्थस्य भाषा का? स्थितधीः किं प्रभाषेत किमासीत किं व्रजेत?**

**तात्पर्यम्**— स्वविशिष्टावस्थित्यनुगुणेन सर्वेषां मनुष्याणां लक्षणानि वर्तन्ते| तथैव कृष्णभावनाभावितस्य वचनगतिमतिभावादिविशिष्टस्वभावः| यथा विशिष्टलक्षणैः कोऽपि धनीति वा रोगीति वा विद्वानिति वा ज्ञायते तथैव कृष्णदिव्यभावनाभावितस्य विशिष्टलक्षणानि सन्ति यैः स सर्वत्राचरति| तानि भगवद्गीतायां ज्ञातुं शक्यानि| अत्र कृष्णभावनाभावितस्य वचनप्रकारो महत्तमो यतो मनुष्यस्य महत्तमो गुणो वाणी| यावन्न भाषते तावन्मूर्खो नाभिज्ञायत इति प्रसिद्धं यतो निश्चयेन यावत् सुवेशो मूर्खो न भाषते तावन्नाभिज्ञायते किन्तु भाषित्वा सद्य आत्मानं दर्शयति| कृष्णभावनाभावितः केवलं श्रीकृष्णविषयमथवा श्रीकृष्णसम्बद्धविषयं वदति| इदं तस्य प्रधानलक्षणम्| अन्यलक्षणानि स्वतोऽनुगच्छन्ति यथाग्रे प्रोक्तम्|

**श्रीभगवानुवाच**

**प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्|**

**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते||५५||**

**श्रीभगवानुवाच**— श्रीभगवानुक्तवान्; **प्रजहाति**— त्यजति; **यदा**— यस्मिन् काले; **कामान्**— इन्द्रियतृप्तीच्छाः; **सर्वान्**— समस्तान्; **पार्थ**— हे पृथापुत्र; **मनः+गतान्**— मनोरथान्; **आत्मनि**— आत्मशुद्धावस्थायाम्; **एव**— अवश्यम्; **आत्मना**— विशुद्धमनसा ; **तुष्टः**— प्रसन्नः; **स्थितप्रज्ञः**— ब्रह्मस्थः; **तदा**— तस्मिन् काले; **उच्यते**— अभिधीयते|

**श्रीभगवानुवाच— हे पार्थ! यदा सर्वान्मनोगतान् कामान् प्रजहात्य् आत्मनात्मन्येव तुष्टो भवति तदा स स्थितप्रज्ञ उच्यते|**

**तात्पर्यम्**— एवमुक्तं भागवते (५.१८.१२)—

यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुराः|

हरावभक्तस्य कुतो महद्गुणा मनोरथेनासति धावतो बहिः|| इति|

फलतः सर्वविधा मनोधर्मकल्पिता विषयकामा त्यजनीया इत्यत्र यथार्थमुक्तम्| कृत्रिमसाधनैस्ता विषयकामा विरोद्धुमशक्याः| किन्तु कृष्णभावनामृतप्रवृत्ते सति तस्य विषयकामा बाह्यप्रयासैर्विना स्वतः शाम्यन्ति| अतः शङ्कां हित्वा कृष्णभावनामृतप्रवृत्तो भवेद्यतो भक्तिमयसेवा सद्यो दिव्यचेतनापदं नयति| महात्मा भगवन्नित्यदासरूपेणात्मसाक्षात्कारेण सदैवात्मनि तुष्टोऽवतिष्ठते| तादृशस्य ब्रह्मस्थस्य क्षुद्रा लौकिकविषयकामा नैव| प्रत्युत स परमेश्वरनित्यदासरूपेण सदैव स्वभावे सुखी तिष्ठते|

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः|**

**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते||५६||**

**दुःखेषु**— त्रिविधक्लेशेषु; **अनुद्विग्न+मनाः**— अविक्षिप्तं मनो यस्य सः; **सुखेषु**— आनन्देषु; **विगत+स्पृहः**— इच्छाहीनः; **वीत+राग+भय+क्रोधः**— आसक्तिभीकोपरहितः; **स्थित+ धीः**— स्थिरमनाः; **मुनिः**— ऋषिः; **उच्यते**— अभिधीयते|

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहो वीतरागभयक्रोधो यः स स्थितधीर्मुनिरुच्यते|**

**तात्पर्यम्**— यथार्थसिद्धान्ताप्तिं विना नानाप्रकारैर्मननशील इति मुनिशब्दार्थः| नासावृषिर्यस्य मतं न भिन्नमित्युक्तं महाभारते वनपर्वणि (३१३.११७)| किन्तु यथात्रोक्तं भगवता स्थितधीर्मुनिः सामान्यमुनेर्भिन्नः| स्थितधीर्मुनिः सदैव कृष्णभावनामृतस्थो हि तस्य सर्वकल्पनापूर्वकविचारसमाप्तत्वात्| स प्रशान्तनिःशेषमनोरथान्तर उच्यते (स्तोत्ररत्ने, ४३), वासुदेवः सर्वमिति स महात्मा सुदुर्लभ इति सिद्धान्तस्वीकारत्वात्| स स्थितधीर्मुनिरुच्यते| तादृशः सर्वथा कृष्णभावनाभावितो न खलु विविधक्लेशाक्रमणोद्विग्नो यतः स्वपूर्वदुष्कर्मणाधिकान् क्लेशानहमेवाप्तुमर्हामीति मत्वा सर्वं दुःखं भगवत्कृपारूपं पश्यति| भगवत्कृपया मद्दुःखं न्यूनीकृतमिति च पश्यति| तथैव सुखे सति भगवत्कृपयैवानर्होऽप्यहं सुखीति मन्यते| भगवत्कृपयैव सुखदावस्थितावस्मि येन भगवत्सेवां सम्यक् कर्तुं प्रभवामीत्यनुभवति च| भगवत्सेवाकृते स सदैव साहसिक उद्यमी च तिष्ठते तथा चासक्तिविरक्तिभ्यां प्रभावितो नैव| स्वेन्द्रियतृप्तये वस्तूनां ग्रहणमासक्तिः| विषयासक्त्यभावो विरक्तिः| कृष्णभावनामृतस्थस्य त्वासक्तिविरक्ती नैव तस्य भगवत्सेवाप्राणसमर्पणात्| फलतः स्वप्रयासेषु विफलेषु सत्सु स न खलु कुप्यति| साफल्यं वा न वा कृष्णभावनाभावितः सदैव दृढसङ्कल्पः|

**यः सर्वत्रानभिस्नेहस्तत्तत् प्राप्य शुभाशुभम्|**

**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता||५७||**

**यः**— यादृशः; **सर्वत्र**— सर्वस्थानेषु; **अनभिस्नेहः**— स्नेहरहितः; **तत्**— अदः; **तत्**— अदः; **प्राप्य**— लब्ध्वा; **शुभ +अशुभम्**— मङ्गलामङ्गलम्; **न**— न कदाचन; **अभिनन्दति**— प्रशंसति; **न**— न कदाचन; **द्वेष्टि**— कुप्यति; **तस्य**— अमुष्य; **प्रज्ञा**— चेतना; **प्रतिष्ठिता**— अचला|

**यः सर्वत्रानभिस्नेहस्तत्तच्छुभाशुभं प्राप्य नाभिनन्दति न द्वेष्टि च तस्य प्रज्ञा प्रतिष्ठिता|**

**तात्पर्यम्**— जगति सदैव कश्चन शुभोऽशुभो वा क्षोभो घटते| शुभाशुभानुद्विग्नः संसारक्षोभाविक्षिप्तो यः स कृष्णभावनामृतस्थिरो बोध्यः| यावत् संसारे स्थितिस्तावच्छुभाशुभसम्भव एवास्य द्वन्द्वपूर्णत्वात्| कृष्णभावनामृतस्थिरस्तु शुभाशुभानभिभूतो हि तस्य सर्वमङ्गलरूपकृष्णैकचिन्तामात्रत्वात्| एतत् कृष्णभावनामृतं सिद्धदिव्यावस्थितौ समाधौ मनुष्यं स्थापयति|

**यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः|**

**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता||५८||**

**यदा**— यस्मिन् काले; **संहरते**— अन्तरमाकर्षति; **च**— अपि; **अयम्**— एषः; **कूर्मः**— कच्छपः; **अङ्गानि**— गात्राणि; **इव**— यथा; **सर्वशः**— सर्वथा; **इन्द्रियाणि**— हृषीकाणि; **इन्द्रिय+अर्थेभ्यः**— इन्द्रियविषयेभ्यः; **तस्य**— अमुष्य; **प्रज्ञा**— चेतना; **प्रतिष्ठिता**— स्थिरा|

**यदायं कूर्म इवाङ्गानीन्द्रियाणि चेन्द्रियार्थेभ्यः सर्वशः संहरते तदा तस्य प्रज्ञा प्रतिष्ठिता|**

**तात्पर्यम्**— स्वप्रयोजनानुसारेणेन्द्रियाणि नियन्त्रितुं समर्थ इति योगिनो भक्तस्यात्मसाक्षात्कृतस्य वा निकषः| प्रायस्तु जना इन्द्रियदासास्तदाज्ञानिर्दिष्टाः| स्थितधीः किमासीतेति प्रश्नस्योत्तरमेतत्| इन्द्रियाणि सविषसर्पतुल्यानि| तानि स्वेच्छया निर्यन्त्रणहीनेनाचरितुकामानि| योगी भक्तो वाहितुण्डिक इव सर्पनियन्त्रणायातिबलवान् भवेत्| स स्वातन्त्र्येण कार्याय तानि कदाचिन्नानुजानाति| तन्मा कुर्विति तत् कुर्विति च शास्त्रविविधादेशाः| इन्द्रियतृप्तिनिरोधं कृत्वा तानेवादेशान् पालयितुमसमर्थो यस्तस्य कृष्णभावनामृते दृढं स्थिरता न सम्भवेत्| अत्र प्रतिपादितं श्रेष्ठोदाहरणं कूर्मः| स कस्मिंश्चित् क्षणे स्वेन्द्रियाणि संहर्तुं शक्नोति पुनश्च विशिष्टप्रयोजनेभ्यस्तानि दर्शयितुं शक्नोति| तथैव कृष्णभावनाभावितानामिन्द्रियाणि भगवत्सेवायां कस्मिंश्चिद्विशिष्टप्रयोजन एव प्रयुज्यन्तेऽन्यथा संह्रियन्ते| अत्र स्वेन्द्रियतृप्तिस्थानेऽर्जुनाय भगवत्सेवायामिन्द्रियप्रयोग उपदिष्टः| भगवत्सेवायां सदैवेन्द्रियस्थापनमिति स्वान्तरेन्द्रियस्थापककूर्मदृष्टान्तेनोपदेशः|

**विषया विनिवर्तन्ते निराहारस्य देहिनः|**

**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते||५९||**

**विषयाः**— इन्द्रियार्थाः; **विनिवर्तन्ते**— विरमन्ति; **निराहारस्य**— आहारादिविषयेभ्यो विरमति यस्तस्य; **देहिनः**— शरीरधारिणः; **रस+वर्जम्**— रुचिं त्यक्त्वा; **रसः**— भोगानुभवः; **अपि**— च; **अस्य**— एतस्य; **परम्**— अत्युत्कृष्टम्; **दृष्ट्वा**— अनुभूय; **निवर्तते**— विरमति|

**देहीन्द्रियतृप्तिनिवृत्तः स्यात्| इन्द्रियतृप्तिरुचिस्तु तिष्ठत्येव| किन्तु परं रसं दृष्ट्वा स तादृशकार्याणि त्यक्त्वा स्थिरचेतनो भवति|**

**तात्पर्यम्**— दिव्यावस्थायामस्थितस्येन्द्रियतृप्तिनिवृत्तिरसम्भवः| विधिविधानैरिन्द्रियतृप्तिनियन्त्रणपद्धतिः खाद्यविशेषेभ्यो रोगिणो नियन्त्रणवत्| रोगिणे तु न तानि नियन्त्रणानि रोचन्ते न च तस्य खाद्यरुचिर्नश्यति| तथैव यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपाष्टाङ्गयोगाध्यात्मपद्धत्येन्द्रियनियन्त्रणमल्पज्ञेभ्यः परज्ञानहीनेभ्य उपदिश्यते| किन्तु परमेश्वरस्य श्रीकृष्णस्य सौन्दर्यमस्वादत यः क्रमशः कृष्णभावनामृतप्रगतौ जडवस्तुषु तस्य रुचिः पुनर्न भवति| अतो नियन्त्रणानि पारमार्थिकजीवनोत्कर्षेऽल्पज्ञेभ्यो नवशिष्येभ्यः कल्पन्ते| यावत्तु कृष्णभावनामृते रुचिस्तत्त्वतो नैव तावदेव तानि नियन्त्रणानि हितकराणि| यदा कोऽपि तत्त्वतः कृष्णभावनाभावितोऽस्ति तदाल्पकवस्तुषु तस्य रुचिः स्वतः नश्यति|

**यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः|**

**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः||६०||**

**यततः**— प्रयासं कुर्वतः; **हि**— अवश्यम्; **अपि**— यद्यपि; **कौन्तेय**— हे कुन्तीपुत्र; **पुरुषस्य**— नरस्य; **विपश्चितः**— विवेकज्ञानपूर्णः; **इन्द्रियाणि**— हृषीकाणि; **प्रमाथीनि**— क्षोभणानि; **हरन्ति**— आकर्षन्ति; **प्रसभम्**— बलेन; **मनः**— मानसः|

**हे कौन्तेय! तन्नियन्त्रणाय यततो विपश्चितोऽपि पुरुषस्य प्रमाथीनीन्द्रियाणि प्रसभं मनो हरन्ति हि|**

**तात्पर्यम्**— बहवो विद्वांसो मुनयो दर्शनज्ञा अध्यात्मवादिनश्चेन्द्रियाणि जेतुं प्रयतन्ते किन्तु तेषां प्रयासाननादृत्य कदाचित्तेषु महत्तमोऽपि विक्षिप्तमनसेन्द्रियभोगे पतति| योगाभ्यासेन विविधतीव्रतपोभिश्चेन्द्रियाणि नियन्त्रयितुं प्रयतमानोऽपि महर्षिः सिद्धयोगी विश्वामित्रोऽपि मेनकया सम्भोगप्रवृत्तिं नीतः| अवश्यमेव विश्वेतिहासेऽनेके सदृशदृष्टान्ताः| तस्मात् पूर्णकृष्णभावनामृतहीनस्येन्द्रियमनोनियन्त्रणमत्यन्तं दुःसाध्यम्| श्रीकृष्णे मनोयुक्तिं विना लौकिककार्येभ्यो विरन्तुमशक्यम्| महता साधुना भक्तेन श्रीयामुनाचार्येणेदं व्यावहारिकोदाहरणं प्रतिपादितम्—

यदवधि मम चेतः कृष्णपदारविन्दे

नवनवरसधामन्युद्यतं रन्तुमासीत्|

तदवधि बत नारीसङ्गमे स्मर्यमाने

भवति मुखविकारः सुष्ठु निष्ठीवनं च|| इति|

कृष्णभावनामृते दिव्यशोभैस्तावदस्ति यत् स्वतो लौकिकभोगो निरसो भवति| यथैव क्षुधितस्य पुष्टिकरखाद्यपर्याप्तमात्रया क्षुधातृप्तिः| महाराजोऽम्बरीषोऽपि महायोगिनं दुर्वासमुनिमजयत् केवलं कृष्णभावनामृते मनोयुक्तत्वात्| “स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने” इत्यादौ|

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः|**

**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता||६१||**

**तानि**— अमूनीन्द्रियाणि; **सर्वाणि**— समस्तानि; **संयम्य**— नियन्त्र्य; **युक्तः**— निरतः; **आसीत्**— स्थितो भवेत्; **मत्+परः**— मया सम्बद्धः; **वशे**— दमे; **हि**— एव; **यस्य**— यस्य कस्य; **इन्द्रियाणि**— हृषीकाणि; **तस्य**— अमुष्य; **प्रज्ञा**— चेतना; **प्रतिष्ठिता**— स्थिरा|

**तानि सर्वाणीन्द्रियाणि संयम्य युक्तो मत्पर आसीत यत इन्द्रियाणि वशे यस्य तस्य प्रज्ञा प्रतिष्ठिता|**

**तात्पर्यम्**— योगसिद्धिचरमावस्था कृष्णभावनामृतमेवेत्यत्र स्पष्टं व्याख्यातम्| कृष्णभावनामृतहीनस्येन्द्रियसंयमोऽशक्यः खलु| यथा पूर्वमुक्तं महाराजेनाम्बरीषेण सह दुर्वासमुनिः कलहं चकार दर्पेण च निष्प्रयोजनं कुपितो भूत्वेन्द्रियाणि निग्रहीतुं न शेके| प्रत्युत यद्यपि स मुनिवत्तावान् बलवान् योगी नासीत्तथापि राजा भगवद्भक्तभूतः सर्वानन्यायांस्तूष्णीं सेहे येन विजयी बभूव| श्रीमद्भागवतोक्तगुणकारणान्नृप इन्द्रियसंयमसमर्थ आसीत्—

स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने|

करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये||

मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम्|

घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते||

पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने|

कामं च दास्ये न तु कामकाम्यया यथोत्तमश्लोकजनाश्रया रतिः||

(श्री. भा. ९.४.१८२०)

अस्मिन् प्रसङ्गे मत्परशब्दोऽतिसार्थकः| महाराजस्याम्बरीषस्य जीवने मत्परभावप्रकारो वर्णितः| "मद्भक्तिप्रभावेन सर्वेन्द्रियविजयपूर्विका स्वात्मदृष्टिः सुलभेति भावः" इति मत्परपरम्परायां महानाचार्य विद्वान् बलदेवविद्याभूषणः| अग्निदृष्टान्तोऽपि कदाचित् प्रतिपाद्यते| यथा प्रकोष्ठेऽन्तरुज्ज्वलाग्निः सर्वं दहति तथा योगिहृत्स्थः श्रीविष्णुः सर्वविधानि मलानि दहतीति| योगसूत्रेऽपि श्रीविष्णौ ध्यानं प्रतिपादितं न तु शून्ये| अविष्णुतत्त्वे ध्यायमाना कुयोगिनो मायाजालान्वेषणेन केवलं कालं वृथा क्षयन्ति| कृष्णभावनाभाविताः श्रीभगवदनुरक्ता भवेमेति यथार्थयोगस्य लक्ष्यम्|

**ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते|**

**सङ्गात् सञ्जायते कामः कामात् क्रोधोऽभिजायते||६२||**

**ध्यायतः**— चिन्तयतः; **विषयान्**— इन्द्रियार्थान्; **पुंसः**— जनस्य; **सङ्गः**— आसक्तिः; **तेषु**— अमीषु; **उपजायते** — उद्भवति; **सङ्गात्**— आसक्तेः; **सञ्जायते**— उद्भवति; **कामः**— इच्छा; **कामात्**— इच्छायाः; **क्रोधः**— कोपः; **अभिजायते**— उद्भवति|

**विषयान् ध्यायतः पुंसस्तेषु सङ्ग उपजायते सङ्गात् कामः सञ्जायते कामात् क्रोधोऽभिजायते च|**

**तात्पर्यम्**— इन्द्रियविषयान् ध्यायन् कृष्णभावनामृतहीनो लौकिककामवशः| इन्द्रियाणां कृते यथार्थकार्याण्यपेक्ष्यन्तेऽन्यथा भगवद्दिव्यप्रेममयसेवायां प्रवृत्तान्यभूत्वा तान्यवश्यं लौकिकसेवाकार्याण्यन्विक्षन्ते| संसारे शिवब्रह्माद्याः सर्वे हृषीकविषयप्रभाववशाः किमुत दिवौकसः| ततः संसारभ्रान्तिनिःसरणायैक एवोपायः कृष्णभावनामृतस्वीकारो हि| ध्यानेऽतिमग्नभूतोऽपि शिवः पार्वत्या सम्भोगाय क्षोभितो भूत्वा प्रस्तावं स्वीचकार फलतश्च कार्त्तिकेयो जज्ञे| तथैव युवा भगवद्भक्तो हरिदासपादो मायादेव्या प्रेरितः किन्तु सुखेन परीक्षोत्तीर्णो बभूव श्रीकृष्णशुद्धभक्त्या| यथा श्रीयामुनाचार्येणोक्तं निर्व्याजो भगवद्भक्तो भगवत्सङ्गेऽध्यात्मसुखरूपस्य परतररसस्यानुभवेन सर्वाँल्लौकिकभोगांस्त्यजति| इदं सिद्धिरहस्यम्| अतो यद्यपि कृष्णभावनामृतहीनः कृत्रिमनिग्रहेणेन्द्रियसंयमे बलवान् स्यात्तथाप्यन्ततस्तस्य वैफल्यं निश्चितमेव यत इन्द्रियसुखेऽल्पतमो विचारोऽपीन्द्रियतृप्तये तं क्षोभयिष्यति|

**क्रोधाद् भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः|**

**स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति||६३||**

**क्रोधात्**— कोपात्; **भवति**— घटते; **सम्मोहः**— सम्यग् भ्रमः; **सम्मोहात्**— भ्रमात्; **स्मृति+विभ्रमः**— स्मरणवैक्लव्यम्; **बुद्धि+नाशः**— प्रज्ञाहानिः; **बुद्धि+नाशात्**— प्रज्ञाहानेः; **प्रणश्यति**— पतति|

**क्रोधात् सम्मोहो भवति सम्मोहात् स्मृतिविभ्रमः स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशान्मनुष्यः प्रणश्यति|**

**तात्पर्यम्**— अस्मत्कृतेऽयं श्रीलरूपगोस्वामिप्रतिपादित आदेशः—

प्रापञ्चिकतया बुद्ध्या हरिसम्बन्धिवस्तुनः|

मुमुक्षुभिः परित्यागो वैराग्यं फल्गु कथ्यते||

इति भक्तिरसामृतसिन्धौ (१.२.२५८)|

भगवत्सेवायां सर्ववस्तुप्रयोग विद्यत इति कृष्णभावनामृतविकासेन ज्ञातुं शक्यते| कृष्णभावनामृतज्ञानहीना कृत्रिमरूपेण भौतिकवस्तुभ्यो विरमन्ति फलतश्च भवबन्धनमुक्तिमिच्छन्तोऽपि ते त्यागस्य सिद्धावस्थां नैवाधिगच्छन्ति| तेषां मिथ्यावैराग्यं फल्गु कथ्यते| प्रत्युत कृष्णभावनाभावितो भगवत्सेवायां सर्ववस्तुप्रयोगप्रकारं वेत्ति| अतः स लौकिकचेतनाग्रस्तो न भवति| उदाहरणार्थं निर्विशेषवादिमते निराकारत्वेन परमं तत्त्वं भगवान् खादितुं न शक्नोति| निर्विशेषवादिनि सुभोज्यखादनाद्विरन्तुं प्रयतमाने परमभोक्तृभूतः श्रीकृष्णो भक्त्यर्पितं सर्वमश्नातीति जानाति भक्तः| एवं भगवन्तं सुभोज्यानि समर्प्य भक्त उच्छिष्टरूपं प्रसादं गृह्णाति| तथा सर्वमध्यात्मीभवति पतनसङ्कटं च न वर्तते| भक्तः कृष्णभावनामृते प्रसादं गृह्णाति| अभक्तस्तु तद् भौतिकं मत्वा प्रत्याख्याति| तस्मान्निर्विशेषवादी कृत्रिमवैराग्यादिह सुखमनुभवितुमसमर्थ एवानेन च हेतुना मनसोऽल्पक्षोभो भवकूपे पुनस्तं क्षिपति| तादृशात्मा मुक्तिपदं यावदुद्गतोऽपि पुनः पतति भक्तियोगालम्बनाभावादित्युक्तम्|

**रागद्वेषविमुक्तैस्तु विषयानिन्द्रियैश्चरन्|**

**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति||६४||**

**राग+द्वेष+विमुक्तैः**— आसक्तिविरक्तिरहितैः; **तु**— किन्तु; **विषयान्**— इन्द्रियार्थान्; **इन्द्रियैः**— हृषीकैः; **चरन्**— कर्म कुर्वन्; **आत्म+वश्यैः**— स्वेन नियन्त्रितैः; **विधेय+आत्मा**— वशीकृतमना; **प्रसादम्**— भगवत्कृपाम्; **अधिगच्छति**— प्राप्नोति|

**विधेयात्मा तु रागद्वेषविमुक्तैरात्मवश्यैरिन्द्रियैर्विषयाञ् चरन् भगवत्प्रसादमधिगच्छति|**

**तात्पर्यम्**— बाह्यतः केनचित् कृत्रिमोपायेनेन्द्रियाणि संयमितुं शक्यन्त इति पूर्वं व्याख्यातं किन्तु यदीन्द्रियाणि भगवत्सेवायां नैव युक्तानि तर्हि पतनावसराः खलु सम्भवति| यद्यपि पूर्णकृष्णभावनाभावितो बाह्यतो विषमपदस्थः प्रतीयेत तथापि कृष्णभावनाभावितत्वाद्विषयिकार्येषु तस्यासक्तिर्नैव| कृष्णभावनाभावितस्यैकैव चिन्ता श्रीकृष्णतृप्तिर्हि न तु किमप्यन्यत्| तस्मात् स समस्तरागद्वेषातीतः| श्रीकृष्ण इच्छति चेद् भक्तः किमपि प्रायोऽनीष्टकर्मापि कर्तुं प्रभवति| श्रीकृष्णो नेच्छति चेत्तदपि न करिष्यति भक्तो यत् प्रायः स्वतृप्तये कुर्यात्| अत एव क्रिया निष्क्रियता वा तत्संयमनेऽस्ति तस्य कृष्णादेशैकमात्रकर्मानुष्ठानात्| इयं चेतना भगवदहैतुककृपैव| विषयिपदासक्तिमनादृत्य भक्तस्तामाप्तुमर्हति|

**प्रसादे सर्वदुःखानां हानिरस्योपजायते|**

**प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते||६५||**

**प्रसादे**— भगवदहैतुककृपायां
प्राप्तायाम्; **सर्व+दुःखानाम्**— समस्तलौकिकक्लेशानाम्; **हानिः**— नाशः; **अस्य**— एतस्य; **उपजायते**— घटते; **प्र
सन्न+चेतसः**— तुष्टं मनो यस्य तस्य; **हि**— अवश्यम्; **आशु**— शीघ्रम्; **बुद्धिः**— प्रज्ञा; **पर्यवतिष्ठते**— स्थिरा
भवति|

**भगवत्प्रसादे लब्धे सति, अस्य सर्वदुःखानां हानिरुपजायते| प्रसन्नचेतसो बुद्धिराशु हि पर्यवतिष्ठते|**

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना|**

**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्||६६||**

**न**— न हि; **अस्ति**— वर्तते; **बुद्धिः**— दिव्यप्रज्ञा; **अयुक्तस्य**— अकृष्णभावनाभावितस्य; **न**— न
हि; **च**— अपि; **अयुक्तस्य**— अकृष्णभावनाभावितस्य; **भावना**— स्थिरमनः; **न**— न
हि; **च**— अपि; **अभावयतः**— स्थिरध्यानमकुर्वतः; **शान्तिः**— शमः; **अशान्तस्य**— अशमितस्य; **कुतः**— कुत्र; **सु
खम्**— आनन्दः|

**भगवदयुक्तस्य बुद्धिर्नास्ति न चायुक्तस्य भावना न चाभावयतः शान्तिः| अशान्तस्य कुतः सुखम्|**

**तात्पर्यम्**— यदि कृष्णभावनामृतस्थत्वं नैव तर्हि शान्तिरसम्भवा| भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरं सुहृदां सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छतीति पञ्चमाध्याये दृढीकृतम्| अत एव कृष्णभावनामृतहीनस्य मनसोऽन्तिमं लक्ष्यं भवितुमशक्यम्| क्षोभोऽन्तिमलक्ष्याभावहेतुकः| ततः श्रीकृष्णो भोक्ता स्वामी सर्वेषां सुहृदित्यत्र निश्चितस्य कस्यचित् स्थिरमनसा शान्तिः सम्भवति| शान्तेरध्यात्मोत्कर्षस्य च प्रदर्शनं कुर्वतोऽपि कृष्णसम्बन्धहीनस्य कर्मप्रवृत्तस्य निश्चयेन सदैव क्लेशः शान्तिराहित्यं च| कृष्णभावनामृतं कृष्णसम्बन्धे हि प्राप्या स्वयंप्रकटावस्था|

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते|**

**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि||६७||**

**इन्द्रियाणाम्**— हृषीकाणाम्; **हि**— अवश्यम्; **चरताम्**— भ्रमताम्; **यत्**— यदिन्द्रियम्; **मनः**— मानसः; **अनुवि
धीयते**— निरन्तरं
युज्यते; **तद्**— अदः; **अस्य**— एतस्य; **हरति**— आकर्षति; **प्रज्ञाम्**— बुद्धिम्; **वायुः**— पवनः; **नावम्**— तरणीम्;
**इव**— यथा; **अम्भसि**— जले|

**वायुरिवाम्भसि नावं हरति चरतामिन्द्रियाणां यन्मनोऽनुविधीयते तदस्य प्रज्ञां हरति|**

**तात्पर्यम्**— यदि सर्वेन्द्रियाणि भगवत्सेवाप्रवृत्तानि नैव तर्हि तेष्वेकमपीन्द्रियतृप्तिप्रवृत्तं दिव्याध्यात्ममार्गोन्नतेर्भक्तं विचालयेत्| यथोक्तं महाराजाम्बरीषजीवनप्रसङ्गे सर्वेन्द्रियाणि कृष्णभावनामृते प्रयोज्यानि यतोऽयमेव मनःसंयमनायोचितोपायः|

**तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः|**

**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता||६८||**

**तस्मात्**— ततः; **यस्य**— यस्य कस्य; **महा+बाहो**— हे बृहद्भुज; **निगृहीतानि**— नियन्त्रितानि; **सर्वशः**— सर्वथा; **इन्द्रियाणि**— हृषीकाणि; **इन्द्रिय+अर्थेभ्यः**— हृषीकविषयेभ्यः; **तस्य**— अमुष्य; **प्रज्ञा**— बुद्धिः; **प्रतिष्ठिता**— स्थिरा|

**हे महाबाहो! तस्मादिन्द्रियाणीन्द्रियार्थेभ्यः सर्वशो निगृहीतानि यस्य तस्य प्रज्ञा प्रतिष्ठिता|**

**तात्पर्यम्**— भगवद्दिव्यप्रेममयसेवासर्वेन्द्रियप्रवृत्तिरूपेण कृष्णभावनामृतेनैवेन्द्रियतृप्तिशक्तिं निग्रहीतुं शक्यते| यथैव शत्रयो बलवत्तरसेनया निगृह्यन्ते तथैवेन्द्रियाण्यपि, न केनचिन्मानुषप्रयासेनापि तु भगवत्सेवायां निरन्तरं तत्प्रवृत्तिद्वारैव| कृष्णभावनामृतेनैव तत्त्वतः प्रज्ञास्थिरता भवति तथा चेयं कला सद्गुरुमार्गदर्शनेन शीलनीयेति जानाति यः स मोक्षाधिकारी साधकः|

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी|**

**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः||६९||**

**या निशा**— या रात्रिः; **सर्व+भूतानाम्**— समस्तप्राणिनाम्; **तस्याम्**— अमुष्याम्; **जागर्ति**— प्रबुध्यते; **संयमी**— आत्मवान्; **यस्याम्**— यत्र; **जाग्रति**— प्रबुध्यन्ते; **भूतानि**— प्राणिनः; **सा**— असौ; **निशा**— रात्रिः; **पश्यतः**— अन्तरवलोकमानस्य; **मुनेः**— ऋषेः|

**सर्व+भूतानां निशा या तस्यां संयमी जागर्ति| यस्यां भूतानि जाग्रति सा निशा पश्यतो मुनेः|**

**तात्पर्यम्**— बुद्धिमन्तो द्विविधा| केचनेन्द्रियतृप्तये लौकिककार्येषु चतुराश् अन्ये चाध्यात्मसाक्षात्कारानुशीलनेऽन्तर्दर्शिनः प्रबुद्धा चेति| अन्तर्दर्शिनो विचारवतो मुनेः कार्याणि लौकिकजनानां मते रात्रिरेव| तस्यां रात्रौ लौकिकजना सुप्तास्तिष्ठन्ते आत्मसाक्षात्काराज्ञानात्| लौकिकजनरात्रावन्तर्दर्शी

मुनिर्जागरूकस्तिष्ठते| मुनिरध्यात्मानुशीलने क्रमिकोन्नत्या दिव्यानन्दमनुभवति| प्रत्युतात्मसाक्षात्कारं प्रति सुप्तो लौकिककार्येषु प्रवृत्तो लौकिक इन्द्रियभोगनानात्वं स्वप्ने पश्यन् कदाचिद्दुःखं कदाचित् सुखमनुभवति| अन्तर्दर्शी सदैव लौकिकसुखदुःखविरक्तः| संसारप्रतिक्रियाभिर्विक्षिप्तोऽभूत्वा स आत्मसाक्षात्कारकार्याणि कुर्वन्नास्ते|

**आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्|**

**तद्वत् कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी||७०||**

**आपूर्यमाणम्**— पूरितं सन्तम्; **अचल+प्रतिष्ठम्**— दृढं स्थितम्; **समुद्रम्**— सागरम्; **आपः**— जलानि; **प्रविशन्ति**— अन्तर्गच्छन्ति; **यद्वत्**— यथा; **तद्वत्**— तथा; **कामाः**— इच्छाः; **यम्**— यं कम्; **प्रविशन्ति**— अन्तर्गच्छन्ति; **सर्वे**— समस्ताः; **सः**— असौ मनुष्यः; **शान्तिम्**— शमम्; **आप्नोति**— लभते; **न**— न हि; **काम+कामी**— इच्छातृप्त्यभिलाषी|

**यद्वदाप आपूर्यमाणमचलप्रतिष्ठं समुद्रं प्रविशन्ति तद्वत् सर्वे कामा यं प्रविशन्ति स शान्तिमाप्नोति न कामकामी|**

**तात्पर्यम्**— समुद्रे सदैवाद्भिः पूर्णेऽपि विशेषतो वर्षाकालेऽधिकेन जलेनापि पूर्यते| समुद्रस्तु स्थिरस्तिष्ठते विक्षिप्तो न भवति न च तटसीमामतिक्रामति| कृष्णभावनामृतस्थिरोऽपि तादृशः| यावद्देहः स्थास्यते तावत्तदिन्द्रियतृप्तीच्छाः| भक्तस्तु ताभिरिच्छाभिर्विलिप्तो न भवति तस्य पूर्णत्वात्| कृष्णभावनाभावितस्य काचनावश्यकता नैव यतो भगवांस्तस्य सर्वलौकिकावश्यकतापूरकः| अत एव स समुद्रवत् सदैव स्वात्मनि पूर्णः| समुद्रगमनदीजलवदिच्छास्तं गच्छेयुः परन्तु स स्वकार्यस्थिर सन्निन्द्रियतृप्तीच्छाभिरल्पमात्रमपि विक्षिप्तो न भवति| लौकिकेन्द्रियतृप्तिसर्वप्रवृत्तिराहित्यमिति कृष्णभावनाभावितस्य प्रमाणमेव यद्यपि तदिच्छा उपस्थिताः| भगवद्दिव्यप्रेममयसेवातुष्टभूतस्थितत्वात् स समुद्रवत् स्थिरस्तिष्ठते येन सम्पूर्णां शान्तिमनुभवति| मुक्तिं यावत् कामकामिनस्तु कदाचन शान्तिं नाप्नुवन्ति किमुत लौकिकसिद्धिकामिनः| सकामकर्मिणो मोक्षकामिनो योगसिद्धिकामिनश्च सर्वे दुःखिनोऽपूर्णेच्छात्वात्| कृष्णभावनाभावितस्तु भगवत्सेवायां सुखी हि तथा च तस्य पूरणीया इच्छा नैव| तत्त्वतः स प्रतीतभवबन्धनमोक्षमपि नेच्छति| लौकिकेच्छाभावात् कृष्णभक्ता पूर्णशान्तौ तिष्ठन्ते|

**विहाय कामान् यः सर्वान् पुमांश्चरति निःस्पृहः|**

**निर्ममो निरहङ्कारः स शान्तिमधिगच्छति||७१||**

**विहाय**— त्यक्त्वा; **कामान्**— इन्द्रियतृप्तीच्छाः; **यः**— यः कः; **सर्वान्**— समस्तान्; **पुमान्**— नरः; **चरति**— जीवति; **निःस्पृहः**— इच्छारहितः; **निर्ममः**— स्वामित्वरहितः; **निरहङ्कारः**— अहङ्काररहितः; **सः**— असौ; **शान्तिम्**— पूर्णशमम्; **अधिगच्छति**— प्राप्नोति|

**सर्वान् कामान् विहाय यः पुमान्निःस्पृहो निर्ममो निरहङ्कारश्चरति स शान्तिमधिगच्छति|**

**तात्पर्यम्**— निःस्पृहत्वमिन्द्रियतृप्तीच्छाराहित्यम्| अथवा कृष्णभावनाभावितभूतेच्छा यथार्थं निःस्पृहत्वम्| देहात्मबुद्धिं विना संसारवस्तुस्वामिबुद्धिं विना च कृष्णनित्यदासस्वरूपबोधः कृष्णभावनामृतस्य सिद्धावस्था| सर्वं श्रीकृष्णसन्तोषाय प्रयोजनीयं तस्य समस्तस्वामित्वादिति तदवस्थास्थितो वेत्ति| अर्जुनः स्वेन्द्रियसन्तोषमिच्छन् योद्धुं नैच्छत् किन्तु सर्वथा कृष्णभावनाभावितो भूत्वा श्रीकृष्णेच्छया युद्धमकरोत्| स्वार्थं युद्धेच्छा नासीत्| श्रीकृष्णकृते तु स एवार्जुनः पूर्णशक्त्या युद्धमकरोत्| यथार्था निःस्पृहता श्रीकृष्णसन्तोषेच्छा न त्विच्छानाशाय कृत्रिमप्रयासः| जीव इच्छारहित इन्द्रियरहितो वा भवितुं न शक्नोति किन्तु तदिच्छागुणः परिवर्तनीयः| ईशावास्यमिदं सर्वमिति लौकिकेच्छारहितोऽवश्यं जानाति ततः कस्मिञ्चिद्वस्तुनि तस्य मिथ्यास्वामिघोषणं नैव| इदं दिव्यज्ञानमात्मसाक्षात्कारमूलकम्| सर्वे जीवाः श्रीकृष्णस्य नित्यविभिन्नांशा अध्यात्मव्यक्तित्वे तस्मान्नित्यस्वरूपेण न कदाचन कृष्णसमोर्ध्वा इति सम्यग् ज्ञानमित्यर्थः| अयं कृष्णभावनामृतबोधो यथार्थशान्तेर्मूलसिद्धान्तः|

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति|**

**स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति||७२||**

**एषा**— इयम्; **ब्राह्मी** — आध्यात्मिका; **स्थितिः**— अवस्था; **पार्थ**— हे पृथापुत्र; **न**— न कदाचित्; **एनाम्**— एताम्; **प्राप्य**— लब्ध्वा; **विमुह्यति**— मोहितो भवति; **स्थित्वा**— स्थितो भूत्वा; **अस्याम्**— एतास्याम्; **अन्त+काले**— जीवनान्ते; **अपि**— च; **ब्रह्म+निर्वाणम्**— भगवद्धाम; **ऋच्छति**— प्राप्नोति|

**हे पार्थ! एषा ब्राह्मी स्थितिः| एनं प्राप्य न विमुह्यति| अन्तकालेऽप्यस्यां स्थित्वा ब्रह्मनिर्वाणमृच्छति|**

**तात्पर्यम्**— दिव्यजीवनं कृष्णभावनामृतं सद्यः प्राप्तुं शक्यतेऽथवा जन्मकोटिभिर्नैव| अत्र सत्यस्य बोधः स्वीकारश्च महत्त्वम्| खट्वाङ्गो महाराजः श्रीकृष्णशरणागत्या मरणात् केभ्यश्चित् क्षणेभ्य एव पूर्वमिमामवस्थां प्राप| संसारजीवनसमाप्तिरिति निर्वाणम्| बौद्धदर्शने संसारजीवनसमाप्तेरनन्तरं केवलं शून्यं वर्तते किन्तु भगवद्गीतोपदेशो भिन्नः| यथार्थं जीवनं संसारजीवनसमाप्तेरनन्तरं प्रारभते| सुमन्दलौकिकजनकृते संसारजीवनसमाप्तिज्ञानं पर्याप्तमेव| अध्यात्मोन्नतजनानां तु संसारजीवनादनन्तरमन्यं जीवनं वर्तते| अस्य जीवनस्य समाप्तेः पूर्वं कोऽपि सौभाग्येन कृष्णभावनाभावितो भवति चेत्तर्हि स सद्यो ब्रह्मनिर्वाणावस्थामाप्नोति| भगवद्धाम भगवद्भक्तिमयसेवा चाभिन्ने| उभयोः परमपदत्वेन भगवद्दिव्यप्रेममयसेवाप्रवृत्तिर्भगवद्धामप्राप्तिरेव| संसार इन्द्रियतृप्तिकार्याणि वर्तन्ते| वैकुण्ठे तु कृष्णभावनाभावितकार्याणि| अस्मिन्नेव जन्मनि कृष्णभावनामृतप्राप्तिः सद्यो ब्रह्मप्राप्तिरेव कृष्णभावनामृतस्थश्च पूर्वमेव भगवद्धामप्रविष्टः| ब्रह्म जडपदार्थविपर्ययं तत्त्वम्| अत एव संसारकर्मातीतेति ब्राह्मी स्थितिः| भगवद्गीतायां भगवद्भक्तिमयसेवा मोक्षावस्थेति स्वीकृतम्| यथोक्तं— स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पत इति| तस्माद् भवबन्धनमुक्तिरिति ब्राह्मी स्थितिः|

अयं भगवद्गीताया द्वितीयोऽध्यायः समस्तग्रन्थविषयसंक्षेप इति श्रीलभक्तिविनोदपादः| भक्तियोगः कर्मयोगो ज्ञानयोगश्चेति भगवद्गीताविषयाः| द्वितीयाध्याये कर्मयोगो ज्ञानयोगश्च स्फुटं व्याख्यातौ भक्तियोगस्याल्पप्रभा दर्शिता च|

इति श्रीमद्भगवद्गीतायां गीतासारनामद्वितीयाध्याये भक्तिवेदान्ततात्पर्याणि समाप्तानि|